**ATESVARA ORIENTAL SERIES—No. 21**

TOR :—PROF. P. V. RAMANUJASWAMI, M.A.

# JANASRAYI




## JANASRAYA

EDITED BY

SRI M. RAMAKRISHNA KAVI, M

READER IN SANSKRIT

SRI VENKATESVARA ORIENTAL INSTITUTE

TIRUPATI





PRINTED AT

TIRUMALAI-TIRUPATI DEVASTHANAMS PRESS

TIRUPATI.

1950

Re. 1-0-0

श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला. सं २०

पादक.—श्रीपरवस्तु वेङ्कटरामानुजस्वामी, एम. ए.



# जानाश्रयी




जनाश्रयप्रणीता छन्दोविचितिः

श्रीवेङ्कटेश्वरप्राच्यविद्याविमर्शनमन्दिरे

प्रधानसंस्कृतभाषावाङ्मयविमर्शकेन

एम. ए. इत्युपाधिधारिणा श्री मा. रामकृष्णकविना

संशोधिता



तिरुपति

तिरुमल-तिरुपति-देवस्थानमुद्रणालये मुद्रिता

१९५०

[ मूल्यम् रू. १-०-० ]

# INTRODUCTION.

Janāśrayi or Jānāśrayi was produced by the King Janāśraya otherwise called Mādhava-Varman. He was assisted by Guṇasvāmin or to put it in another form, Guṇasvāmin wrote it in the name of his Master Janāśraya. It was written in Sūtra form (aphorisms) with explanations in prose and it is said that the sūtras were composed by the King and the explanations by the poet, Guṇasvāmin. Janāśraya lived between 580 and 620 A. D. and seems to have been a Buddhist.

The work extends over six chapters the first of which deals with the nomenclature in the work. The next four chapters treat of the metres of different prosodical length and the last chapter treats of the rules of prosody. The work is small and includes 197 quotations given as examples, from the Budhist works, Bharata, Vararuci, Śūdraka, Kālidāsa, Kumāradāsa, Bhāravi, Vikaṭanitambā and Sundarapāṇḍya. Among the Buddhist writers Aśvaghoṣa may be mentioned with his two works *Buddhacuarita* and *Saundarananda* from which quotations are given and *Sūtrālaṅkāra* of Aśvaghoṣa is mentioned as a source of a vast number of quotations which the author has not given. As to Vararuci and Śūdraka, a verse from each of their Bāṇas is quoted. From Bhāravi a mere citation of his verse is shown. Quotations are taken from Kālidāsa's *Raghuvaṁśa*, *Meghasandesa*, *Kumārasambhava* and *Śākuntala*; and Aśvaghoṣa, the Buddhist and Kumāradāsa are found quoted. But Vikaṭanitambā is a character in a farce and its author's name is not known but it may be Govindasvamin. Another quotation is from Sundarapāṇḍya's *Dviṣaṣṭi* wich must have been composed not later than 500 A. D, Sundarapāṇḍya has also written a commentary on Vedanta Sutras of Vyāsa or upon its commentary. These two writers Vikaṭanitambā and Sundarapāṇḍya are considered as later writers, but from the existence of their quotations in this

work, both of them are to be considered as earlier writers. From the mode of quotations given under Kālidāsa and Bhāravi, it has to be considered that Kālidāsa must have lived about the second or third century, while Bhāravi in 500 A. D., much nearer to our author. The other quotations are from Buddhists and older Hindu writers. Two verses are from *Nāṭyaśāstra* of Bharata and the verse (*Dhruvam asti kanduka*) is oft quoted, but we do not know its real author. The other quotations are found in various works of the Buddhists and the Hindus in Sanskrit. They will be about 175 verses, a large number from our point of view. Most of them must have been from the Buddhist works like *Sūtrālaṅkāra*

The poet Guṇasvāmin must be the author of the Sutras and their commentary. The king lived between 580-620 A. D. and was called Janāśraya Mādhava Varman. It connot be decided whether he was a Buddhist or a Hindu but he might be a Hindu. He is evidently a very good scholar in Sanskrit. The verse quoted under sūtra 114 of chapter IV on page 38 seems to be of Guṇasvāmin, upon the king, which shows that he had a peacock *dhvaja*.

The first verse in the book belongs to the poet. The author adopts a peculiar method in chandas (prosody) and to furnish examples he gave quotations from various early works. His concept of the *gaṇa* is entirely new and he asserts that changes were made by him to enlarge the dimensions of the metres but he has restricted himself to *laukika-poetry*. In the description of *gaṇas* which he has innovated, the last letter of the name must be taken as the sign of the *gaṇa* and from the eighth sūtra to the end the vowels attached to the first consonants can also be taken as representatives of those gaṇas. For instance गङ्गास् नदीज् must be represented as *Sa-gaṇa*, *Ja-gaṇa* etc. while नूनसाग् and the *gaṇas* that follow can also be represented by ऊ etc. It is this eccentricity that has delayed the publication of the work.

The concluding portion of the book is not very correct in the last chapter as it contains much that is new. The author

has changed the names of several *vṛttas* from Saithava (whom he calls Saivata) Piṅgala and Kāśyapa. In the treatment of the subject in the fifth chapter, he entirely differs from older writers.

Two copies of the work have been obtained for this work, one copy from British Malabar and another from Trivandrum, and with the help of these copies Sri P. V. Ramanujaswami Garu M.A., Director of the Institute and the Principal of the College has given me extremely valuable assistance in the publication of this work without which I could never have published it at all.

M. RAMAKRISHNA KAVI.

चत्वार्याद्याक्षराणि भवन्ति ॥ ३ ॥

आद्यस्य उक्ताख्यस्य छन्दसश्चत्वार्यक्षराणि भवन्ति ।

चतुश्चतुर्वृद्धिरन्येषाम् ॥ ४ ॥

अन्येषामत्युक्तादीनां छन्दसां चतुर्भिश्चतुर्भिरक्षरैरनुक्रमेण वृद्धिर्भवति । तद्यथा— अत्युक्तस्याष्टौ मध्यमस्य द्वादश प्रतिष्ठायाः षोडश इत्येवमादि ।

उत्कृतेः ॥ ५ ॥

तस्याश्चतुश्शतान्यक्षराणि भवन्ति ।

द्व्येकैरूने विराण्णिवृतौ ॥ ६ ॥

द्वे एकञ्च द्व्येकानि, तैः द्व्येकैरिति विग्रहः । तैर्नियमिताक्षराणां छन्दसां द्वाभ्यामक्षराभ्यामूना विराट् नाम भवति एकेनोना निवृत् भवति । वैदिकार्थोऽयमारम्भः । लौकिकं विशेषितलक्षणमेव वृत्तं वा जातिर्वा भवति । लौकिकविराट् यथा—

शूरः सुमुखः सदयः शान्तो धीरस्त्यागी गुणवान भक्तः ।
कुलजोऽस्माकं नित्यं मित्रं भवतु श्लाघ्यम ॥

लौकिकनिवृद्यथा—

अम्भोदानामसितानां श्रुत्वा शब्दं सन्ततबर्हः ।
अम्भोभारान्मन्दगतीनामुद्ग्रीवोऽयं रौति मयूरः ॥

स्वराड्भुरिजावधिके ॥ ७ ॥

द्व्येकैरित्यनुवर्तते । नियमिताक्षराणां छन्दसां द्वाभ्यामक्षराभ्यामधिका स्वराट् नाम भवति, एकेनाधिका भुरिक् नाम भवति । लौकिकस्वराट् यथा—

अथ तत्र शुचौ लतागृहे कुसुमोद्गारिणि तौ निषीदतुः ।
मृदुभिर्मृदुमारुतेरितैस्स्पृगढाविव बालपल्लवैः ॥

लौकिकभुरिग् यथा—

मनोज्ञमपि सिन्दुवारतः कुन्दकुसुममग्र्यं च षट्पदः ।
न स्पृशति तुषारशङ्कितश्चन्द्रालोकविशेषशीतलम् ॥

## चतुर्भागः पादः ॥ ८ ॥

यस्य छन्दसो यावन्त्यक्षराणि तेषां यश्चतुर्थो भागः स पादसंज्ञो भवति। तद्यथा--उक्तस्यैकमक्षरं पादः अत्युक्तस्य द्वे मध्यमस्य त्रीणि एवं सर्वेषामपि।

## उत्कृतेः ॥ ९ ॥

उत्कृतेः षड्विंशत्यक्षराणि पादः।

## स्वरोऽक्षरम् ॥ १० ॥

चत्वार्याद्याक्षराणि (अ. १ सू. ३) चतुश्चतुर्वृद्धिरन्येषाम् (अ. १. सू. ४.) इति सर्वेषां छन्दसामक्षरप्रमाणमुक्तम्। अक्षरशब्दस्तु स्वरव्यञ्जनसामान्यवाची वर्णपर्यायत्वात्। अतो व्यञ्जनव्युदासार्थमाह—स्वरोऽक्षरमिति। स्वरोऽक्षरमिति स्वर एवाक्षरं छन्दोविचितिषु न व्यञ्जनम्। व्यञ्जनस्याप्यक्षरत्वे सति,

स्वयम्भूरुद्रसेनान्यौ नारायणपुरन्दरौ।

इत्येवमादीनामनुष्टुप्त्वं हीयेत, उक्तप्रमाणाधिकाक्षरत्वात्। स्वरो व्यञ्जनयुक्तो भवति न केवलः।

## उकालो लघुः ॥ ११ ॥

उ इत्येवंकालस्वरो लघुसंज्ञो भवति। कालो मात्रा सत्वक्षिनिमेषः अङ्गुलिस्फोटो वा।

## संयोगायोगवाहपरो गुरुः ॥ १२ ॥

संयोगाश्चायोगवाहाश्च संयोगायोगवाहाः ते परे यस्य उकालस्य स संयोगायोगवाहपरः स गुरुसंज्ञो भवति। कः संयोगः व्यञ्जनान्यनन्तराणि भवन्ति। के अयोगवाहाः विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वाराः। तत्र संयोगपरस्तावत्—अक्षः कक्षः--इत्यकारः ऋश्यो वृक्षः इति ऋकारः। अयोगवाहपरोऽपि—कः करोति कस्करोति कः पचति कः पचति त्वं यासि।

## पादान्ते वा ॥ १३ ॥

पादान्ते वर्तमानश्च उकालो वा गुरुसंज्ञो भवति। तद्यथा—

स्वाधीनसुलभमेतन्निरवद्यं विद्यते ममैव खलु ।
अतिथिजनप्रतिपूजनसमर्थरूपं शरीरधनम् ॥

अस्याश्चार्याया आद्यस्यार्धस्यान्त्यस्वरोऽनेन लक्षणेन गुरुर्भवति, अन्यथा आर्येयं न स्यात् हीनमात्रात्वादिति । वाशब्दो विकल्पवाची । क्वचिन्न भवति । तद्यथा— अस्या एव प्रथमतृतीययोः पादयोः । यदि तत्रापि गुरुत्वं स्यादधिकमात्रात्वादिति ।

ऊकालः ॥ १४ ॥

ऊकालश्च स्वरो गुरुसंज्ञो भवति । अत्राह—

ऊकालो दीर्घो द्विमात्रः त्रिमात्रस्तु प्लुतः किं लघवो गुरवः इति तत्रोच्यते । ऊ इत्येवं संहिताकरणाद्दीर्घप्लुतयोर्ग्रहणं भवति ।

तौ ह्भौ ॥ १५ ॥

तौ लघुगुरू यथाक्रमेण 'ह', 'भ' इत्येवंसंज्ञौ भवतः ।

तच्छेदो रगवत् ॥ १६ ॥

तयोर्लघुगुर्वोः छेदो र इव गकार इव च भवति ।

सोऽङ्गुलेऽङ्गुले ॥ १७ ॥

सः हभयोः छेदोऽङ्गुलेऽङ्गुले कर्तव्यः । अङ्गुल्या सम्मितमङ्गुलम् । अस्यारम्भो उत्तरार्थः ।

| | | |
|---|---|---|
| गङ्गास् | ॥ १८ ॥ | ◡◡ |
| नदीज् | ॥ १९ ॥ | ◡ |
| चन्द्रप् | ॥ २० ॥ | ◡ । |
| ननुर् | ॥ २१ ॥ | |
| न चरतिद् | ॥ २२ ॥ | ।।। |
| कमलिनीय् | ॥ २३ ॥ | ।।।◡ |
| जय नरवरण् | ॥ २४ ॥ | ।।।।।। |

| | | | |
|---|---|---|---|
| नूनं साग् | ॥ २५ ॥ | ऽ ऽ ऽ | (मगण) |
| कृशाङ्गीङ् | ॥ २६ ॥ | । ऽ ऽ | (यगण) |
| धीवराश् | ॥ २७ ॥ | > ऽ । ऽ | (रगण) |
| कुरुतेल् | ॥ २८ ॥ | > । । ऽ | (सगण) |
| ते श्री कब् | ॥ २९ ॥ | > ऽ ऽ । | (तगण) |
| विभातिक् | ॥ ३० ॥ | > । ऽ । | (जगण) |
| सातवत् | ॥ ३१ ॥ | > ऽ । । | (भगण) |
| नरतिम् | ॥ ३२ ॥ | > । । । | (नगण) |
| लोलमालाष् | ॥ ३३ ॥ | > ऽ । ऽ ऽ | |
| धैर्यमस्तु तेट् | ॥ ३४ ॥ | > ऽ । ऽ । ऽ | |
| रौति मयूरोञ् | ॥ ३५ ॥ | > ऽ । । ऽ ऽ | |

ते द्विक–चतुष्क–षट्क–त्रिक–पञ्चक–वर्णका वृत्तविधाने ग्रन्थलाघवार्थं परिगृहीताः ।

**अन्तेऽन्त्य उक्तानि व्यञ्जनान्येषां संज्ञा ॥ ३६ ॥**

उक्तानां सूत्राणामन्तेऽन्ते परिगृहीतानि व्यञ्जनानि एषामुक्तानां वर्णानां यथारचनानां संज्ञा भवन्ति ।

**आदिस्वरैश्च गादिसंज्ञाः ॥ ३७ ॥**

गादयो नूनंसाग् इत्येवमादयः । तेषां य आदौ वर्तमानाः स्वराः आदयः तैश्चान्तेऽन्ते उक्तैर्व्यञ्जनैश्च संज्ञा भवति ।

**गणाश्चतुर्ह्रां ॥ ३८ ॥**

ये चतुर्लघवो वर्णसमूहाः ते गणसंज्ञा भवन्ति ।

**पञ्चह्राश्च ॥ ३९ ॥**

पञ्च लघवश्च गणसंज्ञा भवन्ति । पञ्च लघवस्त्वष्टविधाः । तद्यथा—त्र्यक्ष-

राश्चय आदिमध्यान्तलघवः। चतुरक्षराश्चत्वार आदिद्वितीयतृतीयान्तगुरवः। पञ्चाक्षर एकस्सर्वलघुः। कृशाङ्गी ।ऽऽ धीवरी ऽ।ऽ ते श्रीः क ऽऽ। चन्द्र ननु ऽ।।। नदी ननु ।ऽ।।, ननु चन्द्र ।।ऽ।, कमलिनी ।।।ऽ, ननु तरति ।।।।। पृथगारम्भ एतेषां व्यवहारे प्राचुर्यज्ञापनार्थम्। चशब्दो यस्मिन्नादेशे स्वरूपेणैते परिगृहीतास्तस्मिन्नेव तेषां प्रवेशो भवति नान्यत्रेति ज्ञापनार्थम्। "चत्वारो निर्धायिका यी वान्त्यः" इति वक्ष्यति। तत्रान्त्य एव स्थाने यकार ईकारो वा भवति नान्यत्र। नत्वन्येऽपि पञ्चलघव इति।

## यतिः पदच्छेदः ॥ ४० ॥

यतिरवधिः छेद इति पर्यायाः। पदस्य छेदः पदच्छेदः। स तु यतिसंज्ञो भवति।

## सा पादान्ते ॥ ४१ ॥

सा यतिः सर्वस्य पादस्यान्ते भवति।

## जातिषु युजोऽवश्यम् ॥ ४२ ॥

सा तु यतिर्जात्यादिष्वार्यादिषु युजः समस्यावश्यं भवति।

## अयुक्पादान्ते ॥ ४३ ॥

अयुक्पादान्ते नियमो नास्तीत्यर्थादापाद्यं भवति। तद्यथा—

स्वाधीनसुलभमेतन्निरवद्यं वर्तते ममैव खलु।
अतिथिजनप्रतिपूजनसमर्थरूपं शरीरधनम ॥

इयं पुनरार्या पङ्क्तौ छन्दसि। दशदशाक्षराण्यस्याः पादानाम्। तत्रायुजः प्रथमस्य पादस्यान्ते यतिर्न जाता द्वितीयस्य युजः पादस्यान्ते यतिर्जाता। तस्मादयुक्पादान्त एव जातिषु नियमः।

## स्वरैः सनैः ॥ ४४ ॥

सा तु यतिः स्वरैः सनकारैः ग्रन्थेषु विभाव्यमानेषु वक्ष्यते। तद्यथा— मन्दाक्रान्ता मेरुशो नीन् इति। तत्र चतुर्थस्वर ईकारो नकारेण सह नी

इत्युक्तम्, पञ्चश्च ऊकारो नू इति। तत्र श्लोकोऽपि मन्दाक्रान्ताख्यः, चतुर्थे षष्ठे चाक्षरे च यतिर्भवति। उदाहरणम्—

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः इत्यादि।

## द्विर्नान्तैः ॥ ४५ ॥

सा तु यतिः सनकारान्तैर्यत्रोच्यते तत्र द्विरुक्ता भवति। तद्यथा—नुन् इत्युक्ते पञ्चमेऽक्षरे पुनश्च पञ्चमेऽक्षरे यतिर्भवति। एवं शेषेष्वपि ज्ञेयम्।

## भाहौ ॥ ४६ ॥

एको भा गुरुर्द्वे लघू गणयितव्यौ।

इति छन्दोविचित्यां जानाश्रय्यां प्रथमोऽध्यायः ॥

---

अथ द्वितीयोऽध्यायः।

## वृत्तानि ॥ १ ॥

अधिकारोऽयम्। आचतुर्थाध्यायपरिसमाप्तेर्यानि वक्ष्यमाणानि तानि प्रायशो वृत्तानीति ज्ञेयानि।

## विषमार्धसमसमानि ॥ २ ॥

तान्यधिकृतानि विषमवृत्तान्यर्धसमवृत्तानि समवृत्तानि चेति। तत्र विषमवृत्तानि भवन्ति चतुर्णां पादानां मात्राक्षराणां विन्यासासाम्यात्। क्वचित्संख्यावैषम्यादर्धसमवृत्तानि भवन्ति। (समवृत्तानि भवन्ति) चतुर्णां पादानां साम्यात्। एषामुदाहरणान्युत्तरत्र वक्ष्यामः। लक्षणं त्वेषां स्वसंज्ञयैव ज्ञायत इति न सूचितम्।

## भाहेति समानम् ॥ ३ ॥

(भाह ...) यस्य छन्दसो यावन्त्यक्षराणि तानि सर्वाणि च भा इति च ह इति च एकान्तरितानि भवन्ति चेत्तस्य छन्दसस्तथाभूतं तद्वृत्तं समानसंज्ञं भवति। तद्यथा—

मीनजापघट्टितानि
सूर्यरश्मिबोधितानि ।
मत्तषट्पदाकुलानि
पश्य भीरु पङ्कजानि ॥

अथवायमन्योऽर्थ भाहेति समानमिति। भा इत्येव सर्वाण्यक्षराणि सर्वस्य छन्दसः प्रवृत्तानि भवन्ति चेत्तद्वृत्तं समानसंज्ञं भवति। तथा ह इति च प्रवृत्तानि चेत्। भा इति प्रवृत्तं यथा—

कादम्बाकीर्णानां
कान्ते पश्यातुल्याम् ।
अम्भोजैराढ्यानां
त्वं तोयानां शोभाम् ॥

ह इति प्रवृत्तं यथा—

जिनमदनमथन
जनदमनकुशल ।
मम शरणमजर
भव सततममर ॥

## हभेति प्रमाणम् ॥ ४ ॥

(हभा। ०) सर्वस्य छन्दसः सर्वाण्यक्षराणि ह इति भा इति च लघुमादिं कृत्वा एकान्तरितानि भवन्ति चेत्तद्वृत्तं प्रमाणसंज्ञं भवति। तद्यथा—

सरः सरोरुहाततं विराजते
सपुष्पपादपैर्युतं वनं गायुतम् ।
विशुद्धधावराङ्गनायुतं कुलं
बहुश्रुतं नरश्च शान्तमानसः ॥

## वितानमन्यत् ॥ ५ ॥

यत्समानप्रमाणाभ्यां भिन्नलक्षणं तदन्यत्तद्वितानं नाम वृत्तं भवति ।

बुद्ध्या करुणापेशलया .... पचिराज्जीवितमिष्टम् ।

बुद्धो भगवान् लोकहितार्थं शुद्धं तनवान् कीर्तिवितानम् ॥

## उद्गता रीरि-म्रै-तजु-लिरै-नेन् ॥ ६ ॥

अत्रोद्गताप्रकरणे पादविभागो नास्तीति केषाञ्चिद्दर्शनम् । तत्तु न सम्यक् । भगवता पिङ्गलेन उद्गतामेकतः (पिङ्गलच्छन्दस्सूत्रम् अ०. ५ सू०. २८) इति सूत्रकारेण सूचितम् । तस्मात्कर्तव्योऽत्र यत्न इत्यतोऽस्या उद्गतायाः पादविभागः । रीरि (ननुर्, धोवराश्, ननुर्, विभातिक् ।।, ०।०, ।।, ।०।) इति प्रथमः पादः । म्रै (तरतिम्, ननुर्, धैर्यमस्तुतेट् ।।।, ।।, ०।०।०) इति द्वितीयः । तजु (सातवत्, तरतिम्, नरीज्, कुरुतेल् ०।।, ।।।, ।०, ।।०) इति तृतीयः । लिरै (कुरुतेल्, विभातिक्, ननुर्, धैर्यमस्तु तेट् ।।०, ।०।, ।।, ०।०।०) इति चतुर्थः । ने इति नकारेण सह दशमस्वर उक्तः । ततः श्लोकस्यापि दशमेऽक्षरे यतिः । तस्यैव स्वरस्य नकारान्तनिर्देशात्पुनश्च दशमेऽक्षरे यतिः । उदाहरणम् "अथ वासवस्य वचनेन" इत्यादि[1] ।

## तजुस्थाने श्यु सौरभकं नेनेन् ॥ ७ ॥

तजुस्थान इति तृतीये पादे श्यु (धीवराश्, कमलिनीय्, कुरुतेल् ०।०, ।।।०, ।।०) इत्यक्षरविन्यासो भवति चेत् सौरभकं नाम वृत्तं भवति। नेनेन् इति वचनात् दशमे पुनश्च दशमे पुनरपि दशमेऽक्षरे यतिर्भवति । तद्यथा—

असितामलायतविशाल रुचिरतरलोचनद्वयम् ।

चारुभाति तव वक्त्रमिदं परिपूर्णबिम्बमिव चन्द्रमण्डलम् ॥

## आह्ललितं नेम्भै ॥ ८ ॥

उद्गतैव तजुस्थाने आह्लित्यक्षरविन्यासो (तरतिम्, तरतिम्, कुरुतेल्,

1. किरातार्जुनीय स १२, श्लो '

।।।, ।।।, ।।०, ।।०) भवति चेत्तल्ललितं नाम वृत्तं भवति। नेत्रै इति वचनात् दशमे पुनश्च दशमे पुनरपि द्वादशेऽक्षरे यतिर्भवति । तद्यथा—

कमलाकरेषु रुचिरेषु तरुणरविबोधितेष्वमी ।
भ्रमरमधुकरगणा मुदिता विचरन्ति पङ्कजरजोविलोभिता: ॥

उपस्थितप्रचुपितमाद्य: पादो गुकौ ॥ ९ ॥

उपस्थितप्रचुपितं नाम वृत्तं भवति, तस्याद्यपादे गुकौ (नूनंसाग् , कुरुतेल्, विभातिक्, रौतिमयूरोञ् ०००, ।।०, ।०।, ०।।००) इत्यक्षरविन्यासो भवति चेत् ।

लको द्वितीय: ॥ १० ॥

(कुरुतेल्, तरतिम् , विभातिक्, लोलमालाष् ।।०, ।।।, ।०।, ०।००)

णु तृतीय: ॥ ११ ॥

तृतीय: पादो णु (जयनरवरण् , कुरुतेल् ।।।।।, ।।०) इति भवति।

चतुर्थो मदौ ॥ १२ ॥

तस्यैव चतुर्थ: पाद: मदौ (तरतिम्, तरतिम् , नचरतिद् , रौतिमयूरोञ् ।।।, ।।।, ।।।।, ०।।००) इति भवति । तद्यथा—

भातीदं गगनं विनष्टवारिदजालं शरदा विरचितशोभमद्य भद्रे ।
विततरुचिरतरभं विशदतरकिरणचयपूर्णशशाङ्कम् ॥

द्विस्तृतीयो वर्धमानम् ॥ १३ ॥

तस्यैवोपचितप्रचुपितस्य तृतीये पादे णु इति न्यासो द्विर्भवति चेद्वर्धमानं नाम वृत्तं भवति । तद्यथा—

उद्वेगादपुनर्भवे मन: प्रणिधाना-
त्स ययौ शयिकवराङ्गनादनास्य: ।
निशि नृपतिविलयनाद्वनगमनकृतमना:
सरस इव मथितनलिनात् कलहंस:[1] ॥

1. अश्वघोषस्य सौन्दरनन्दे (स २ श्लो ६५)

## स्रौ शुद्धविराड्ऋषभम् ॥ १४ ॥

तस्यैव तृतीयपादे स्रौ (गङ्गास्, ननुर्, धैर्यमस्तु तेद् ऽऽ, ।।, ऽ।ऽ।ऽ) इत्यक्षरविन्यासो भवति चेत् शुद्धविराड्ऋषभं नाम वृत्तं भवति। तद्यथा—

अम्भोदैरनिलोद्धतोरुपर्वतरूपैः
स्थगितं गगनमशेषमद्य रम्यैः।
नीलैर्जलभारमन्थरै-
र्विततरुचिरविशदशचीपतिचापैः॥

## आपीड आद्यो मस् ॥ १५ ॥

आपीडो नाम वृत्तमुच्यते तस्याद्यः पादो मस् इत्यक्षरविन्यासो भवति चेत्।

## आदौ द्वृद्धिरन्येषाम् ॥ १६ ॥

अन्येषां त्रयाणां पादानामादिप्रमाणेन न्यस्ताक्षराणामादौ क्रमेण दकारेण दकाराभ्यां दकारैर्वा वृद्धिर्भवति। एवं सत्यष्टौ द्वादश षोडश विंशत्यक्षराणि भवन्ति पादानाम्। तद्यथा—

(तरतिम्, तरतिम्, गङ्गास् ।।।, ।।।, ऽऽ, नचरतिद् तरतिम्, तरतिम् गङ्गास् ।।।।, ।।।, ।।।, ऽऽ, नचरतिद्, नचरतिद्, तरतिम्, तरतिम्, गङ्गास् ।।।।, ।।।।, ।।।, ।।।, ऽऽ, नचरतिद्, नचरतिद्, नचरतिद्, तरतिम्, तरतिम्, गङ्गास् ।।।।, ।।।।, ।।।।, ।।।, ।।।, ऽऽ.)

प्रविशति च निदाघः
सवकुलकुवलयकरवीरः।
शुकमुखविलिखितफलगुरुसहकारः
स्तनतटविमृदितमणिनिभसकमलशुक्लतायः॥

## आद्यस्य विपर्यासे मञ्जरीलवल्यमृतधाराः ॥ १७ ॥

अस्यैवापीडस्याद्यस्यान्यैर्विपर्यासे सति यथाक्रमं मञ्जरी, लवली, अमृतधारा इत्येव संज्ञितानि त्रीणि वृत्तानि भवन्ति। उदाहरणश्लोकाः पूर्वोक्ता एव क्रमेण पादव्यत्यासं कृत्वा द्रष्टव्याः।

**प्रत्यापीडोऽन्यथा ॥ १८ ॥**

आपीडस्यैव पादानामुक्तक्रमो यो विन्यासस्तेन विनान्यथा विपर्यासे कृते प्रत्यापीडो नाम वृत्तं भवति ।

**अनुष्टुप् ॥ १९ ॥**

अनष्टुप् नाम छान्दोऽधिकृतम् इत । उत्तरं यद्वक्ष्यामोऽध्यायपरिसमाप्ते-स्तदनुष्टुप्छन्दसि भवतीति वेदितव्यम् ।

तस्मिन्ननुष्टुप्छन्दसि वक्त्रं नाम वृत्तमिदानीं यद्वक्ष्यमाणं तत्तस्य लक्षण-मित्येवमवगन्तव्यम् ।

**मु नाद्यात् ॥ २० ॥**

अस्य वक्त्रस्य सर्वेषु पादेषु आद्याक्षरात्परतो मकार (तरतिम् ।।।) उकारश्च (कुरुतेल् ।।ऽ) न भवतः । आद्योऽनियमात् लघुर्वा गुरुर्वा भवति ।

**ड्उपान्त्यम् ॥ २१ ॥**

अन्त्यस्य समीपमुपान्त्यम् । अत्र सर्वत्र ड्कार (कृशाङ्गीड् ।ऽऽ) एव भवति। तद्यथा—

वसन्ते पुष्पमालोघे द्विजानां भ्रमराणां च ।

अतिपातेन मत्तानामपि पानात्त्वयो न स्यात् ॥

**युजोः क् पथ्या ॥ २२ ॥**

अस्मिन्नेव वक्त्रनियमेऽन्त्याक्षरसमीपे युजोः ककारो (विभातिक् ।ऽ।) भवति चेत् पथ्या नाम वृत्तं भवति । तद्यथा—

दक्षिणानिलनिश्वासो विनिद्रकमलेक्षणः ।

कोकिलाखिलवाग्घोषः कालो भाति प्रबुद्धवत् ॥

## विपरीतपथ्यायुजोः क् ॥ २३ ॥

अस्मिन्नेव वक्त्रनियमेऽयुजोः पादयोरन्त्यात्पूर्वं ककारो (विभातिक् ।ऽ।) भवति चेत् विपरीतपथ्या नाम भवति। यथा—

चलत्किसलयांशुको भाति चूतद्रुमो रम्यः ।
मञ्जरीमण्डनोज्ज्वलो राजायते समुत्तुङ्गः ॥

## चपला म् ॥ २४ ॥

अस्मिन्नेव वक्त्रनियमेऽयुजोः पादयोरन्त्यात्पूर्वं मकारो (तिरतिम् ।।।) भवति चेत् चपला नाम भवति। यथा—

भात्यशोकः किसलयकुसुमस्तबकै रम्यैः ।
श्रियं हस्ताधरगतां लज्जयन्निव च स्त्रीणाम् ॥

## विपुला ह युजोः ॥ २५ ॥

अस्मिन्नेव वक्त्रनियमे युजोः पादयोरन्त्यात्पूर्वं लघु(ह) भवति चेत् विपुला नाम वृत्तं भवति। यथा—

पुष्पिताः किंशुकाशोकाः कोकिलाश्च वल्गुस्वनाः ।
वसन्तं कथयन्त्येते विबुद्धांश्च पद्माकरान् ॥

## सर्वत्र सैतवस्य ॥ २६ ॥

अस्मिन्नेव वक्त्रनियमे सर्वेषु पादेष्वन्त्यात्पूर्वं लघुर्भवति विपुला नाम वृत्तं भवति। यथा—

बाधते च पटुस्वनो मेघदुन्दुभिरम्बरे ।
....................वायुवेगवशाल्लताः ॥

## तीमे च ॥ २७ ॥

अस्मिन्नेव वक्त्रनियमे सर्वपादेष्वन्त्यात्पूर्वं तकार (सातवत् ऽ।।), इकारश्च (धीवराश् ऽ।ऽ), मकारश्च (तरतिम् ।।।), एकारश्च (तेश्री कव् ऽऽ।) एकैकशो भवति चेत विपुलासंज्ञितानि चत्वारि वृत्तानि भवन्ति। तत्र तकारविपुला यथा—

नित्यं न भवेत्पुरुषो दुःस्त्रीषु सक्तो मतिमान् ।
दहनाच्छलाच्च विषाद् घोरं खलु स्त्रीहृदयम् ॥

ईकारविपुला यथा—
दुष्टात्मनां स्त्रीजनानां दुष्टं वाक्यं नित्यमिष्टम् ।
स्निग्धं वक्तुमेषमिष्टं नैवातिशिक्षितत्वतः ॥

मकारविपुला यथा—
दुष्टाः खला न सदयाः प्रमदा दोषरहिताः ।
शीतोऽनलश्च मनुजैर्लोके कदाचिदपि वा ॥

एकारविपुला यथा—
बहुश्रुतः शीलान्वितः प्रसूतो विख्याते कुले ।
लघुत्वं तु याच्ञापरः प्रयाति लोके साम्प्रतम् ॥

इति जानाश्रय्यां छन्दोविचित्यां विषमवृत्ताध्यायो द्वितीयः ॥

---

श्रीः

## अथ तृतीयोऽध्यायः ।

द्वितीयेऽध्याये त्रिविधानि वृत्तान्यधिकृतानि । तत्र बाहुल्येन विषमवृत्तलक्षणमुक्तम् । इदानीं तावदर्धसममुच्यते ।

### अर्धे ॥ १ ॥

अधिकारोऽयम् । इत ऊर्ध्वं यद्वक्ष्यामस्तदर्धलक्षणमिति ज्ञेयम् । शेषमप्यर्धमनेन तुल्यलक्षणमिति पृथङ् नोच्यते ।

### उपचित्रं लुरीताज् ॥ २ ॥

उपचित्रकं नामार्धसमवृत्तं भवति । तत्र लुरीत्येकः पादः (कुकुतेकु,

कुरुतेल्, ननुर्, धीवराश् ।।ऽ, ।।ऽ, ।।, ऽ।ऽ) ताञितीतरः (सातवत्, सातवत्, रौतिमयूरोञ् ऽ।।, ऽ।।, ऽ।।ऽऽ)। द्वावेतावर्धं शेषमप्यर्धमनेन तुल्यलक्षणं भवति । तद्यथा—

हरिचन्दनमुत्पल्यूथिकां कोकिलनेत्रनिभा मदिरा च ।
तपसो न कृशस्य फलं नृणां रूपगुणाभ्यधिकाश्च युवत्यः ॥

## द्रुतमध्या तौं ताञ् ॥ ३ ॥

तौं इत्येकः पादः ताञिति द्वितीयः। द्रुतमध्या नाम वृत्तं भवति तस्य तौंविति एकः पादः ताञिति द्वितीयः। (तौं, ननुर्, सातवत्, रौति मयूरोञ्, ।।, ऽ।।, ऽ।।ऽऽ) (ता सातवत्, सातवत्, ञ् रौतिमयूरोञ, ।।, ऽ।।, ऽ।।ऽ।, ऽ।।, ऽ।।, ऽ।।ऽऽ)

यथा—

सकलं सुललाटकपोलं दीर्घभुजं मधुपिङ्गलनेत्रम् ।
सुविभक्तसमुन्नतनासं श्रीरपि वेगवती न जहाति ॥

## भद्रविराट् स्रीङ्ग्रीङ् ॥ ४ ॥

यथा—

बाले तव भाति वक्त्रमेतच्चारुव्यायतलोलनीलनेत्रम् ।
श्रीमच्छुभगात्रि पुण्यगन्धं प्रातर्भास्करबोधितं यथाब्जम् ॥

औपच्छन्दसिकजातिरियम् । लघुगुरुविन्यासविशेषापेक्षया भद्रविराडिति नामनिर्देशः कृतः ।

## केतुमती रीञ्रपित् ॥ ५ ॥

यथा—

अतिलोमशा कुटिलकेशी वायसजंघिका कृशकपोला ।
अहिता नृणां भवति कन्या केतुमती च दस्युजनसेना ॥

## आख्यानिका बेजृकेजृ ॥ ६ ॥

यथा—

अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥

## विपरीताख्यानिका केजृबेजृ ॥ ७ ॥

यथा—

पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तैः मुक्ताफलैः केसरिणां किराताः ॥

## हरिणप्लुता लुरीयुरी ॥ ८ ॥

यथा—

गतिराकुलिता च्युतमुत्पलं भ्रमति दृष्टिरसंयुतमंशुकम् ।
स्खलितं च वचो हसितोत्तरं मदगुणैरसि चण्डि विभूषिता ॥

## अपरवक्त्रा णैदाट् ॥ ९ ॥

यथा—

मरतकहसितं च यामुनं शशिकरपाण्डुरमम्बु जाह्नवम् ।
तदुभयमिदमस्तु पावनं हरिहरयोरिव सङ्गतं वपुः ॥

वैतालीयजातिरियम् । गुरुलघुविन्यासापेक्षयात्र प्रक्षेप इति ।

## पुष्पिताग्रा णीड्दाग्रृ ॥ १० ॥

यथा—

मृदुसुखपवनेन वीज्यमाना शिथिलितबन्धनविप्रमुक्तबन्धा ।
प्रविततितिमिरं समीक्ष्य कालं कुलजवधूरिव मल्लिका जहास ॥

## यमवती शिशिकीकीजृ ॥ ११ ॥

यथा—

चञ्चलायताक्षमुन्नतासितभ्रु जपानिभाधरं प्रियङ्गुसारगौरवम् ।
प्रियामुखं विचिन्त्य विक्लवस्य तथैव जाग्रतः प्रयान्ति रात्रयो हि मे ॥

## देवगीतिका शिशिशृकीकीड् ॥ १२ ॥

यथा—

भ्रातृमातृपुत्रमित्रसौहृदोपघातिकाः
कुलापवादकारिका रजस्तमोविधा त्र्यः ।

शीलशौचधैर्यशत्रवो मनुष्यवागुरा
स्त्रियो न वेत्सि येन तासु रज्यसि त्वम् ॥

**शिखा ण्णणरुण्णणदु ॥ १३ ॥**

यथा—

विगतभयमयमनमथनमुभयहितवचनमुरुतर(वर)करणं
विविधविपुलगुणगणनिलयनमतिशयरुचिरतरवपुषमखिलमिदम् ।
असुरसुरभुजगमनुजवरमहितगुणमहितनुदममरमजरं
प्रणतमुनिवरमिह दशबलधरमिति विपुलविमलतरवरयशसम् ॥

**खंजो युज्ययुजि ॥ १४ ॥**

इयमेव शिखाखञ्जा नाम वृत्तं भवति युजिपादे अयुजि सति । एतदुक्तं भवति । द्वितीयचतुर्थपादौ प्रथमतृतीयौ भवतश्चेत् सैव शिखाखञ्जा नाम वृत्तं भवति ।

**दण्डकेष्वस्योपसंख्यानं कर्तव्यम् ॥ १५ ॥**

पूर्वार्धेन पश्चिमार्धस्य साम्याद्दलोपन्यासः कृतः ।

इति जानाश्रय्यां छन्दोविचित्यामर्धसमवृत्ताध्यायस्तृतीयः ॥

---

श्रीः

## अथ चतुर्थोऽध्यायः ।

अतः परं समवृत्तावसरः । द्वितीयेऽध्याये त्रिविधानि वृत्तान्यधिकृतानि । तत्रान्यतन्त्रानुवृत्त्या विषमवृत्तलक्षणमुक्तं तृतीयेऽर्धसमानाम् । इदानीं समवृत्तानि वक्ष्यन्ते । समानि वृत्तानीत्यनुवर्तते । ततः समानि वृत्तानीति द्वयमप्यधिकृतं वेदितव्यम् ।

**उक्तम् ॥ १ ॥**

उक्तं नाम चतुरक्षरमाद्यं छन्दो विज्ञेयम् । अनन्तरमेव वक्ष्यमाणं समवृत्तमस्मिन् छन्दसि भवति ।

**भा श्रीः ॥ २ ॥**

भा इत्येको गुरुः पादे भवति चेत् श्री नाम वृत्तं भवति । कथमेतदुपलभामहे। सूत्रानुक्तत्वात् । पादे पाद इति समस्तार्धयोरसंभवात् । कथमसंभवः । उक्तस्य चतुरक्षरत्वादेकमक्षरं समस्तमर्धं च न भवति ।

**या श्रीः । सा गौः ॥**

अत्रैकस्य पादस्य लक्षणमुच्यते । शेषाणां त्रयाणां पादानां तत्तुल्यत्वात् पादग्रहणमिति योज्यमध्यायपरिसमाप्तेरिति ।

**अत्युक्तम् ॥ ३ ॥**

अनन्तरमेवोच्यमानं वृत्तमस्मिन् छन्दसि भवति ।

**साशीः ॥ ४ ॥**

तस्य पादे पादे सकारो भवति चेत् आशीर्नाम वृत्तं भवति ।

शान्तिः श्लाघ्या । भूषा नृणाम् ॥

**मध्यमम् ॥ ५ ॥**

मध्यमं नाम द्वादशाक्षरं छन्दः ।

**चञ्चला शृ ॥ ६ ॥**

तस्य पादे पादे शकारो भवनि चेत् चञ्चला नाम वृत्तं भवति । यथा—

कालहा शूलधृक् । शङ्करः पातु वः ॥

**प्रतिष्ठा ॥ ७ ॥**

प्रतिष्ठा नाम षोडशाक्षरं छन्दोऽधिकृतम् ।

**कुसुमिता यृ ॥ ८ ॥**

अस्याः पादे पादे यकारो भवति चेत् कुसुमिता नाम वृत्तं भवति । यथा—

उपवने वरतनोः । कुरवकाः कुसुमिताः ॥

## सुप्रतिष्ठा ॥ ९ ॥

सुप्रतिष्ठा नाम विंशत्यक्षरं छन्दोऽधिकृतम् ।

## भामिनी ट् ॥ १० ॥

तस्य पादे पादे टकारो भवति चेत् भामिनी नाम वृत्तं भवति । यथा—

मत्तकुञ्जरं दृप्तगोवृषम् । हृष्टनागरं राजते पुरम् ॥

## गायत्री ॥ ११ ॥

गायत्री नाम चतुर्विंशत्यक्षरं छन्दोऽधिकृतं वेदितव्यम् ।

## तनुमध्या बृ ॥ १२ ॥

तस्य पादे पादे बृकारो भवति चेत्तनुमध्या नाम वृत्तं भवति । यथा—

धन्या तव धीरा सूक्ष्माङ्गुलकेशी ।
श्रोणी स्तनगुर्वी कन्या तनुमध्या ॥

## उष्णिक् ॥ १३ ॥

उष्णिक् नामाष्टाविंशत्यक्षरं छन्दोऽधिकृतम् ।

## कुमारललिता जस् ॥ १४ ॥

तस्य पादे पादे जकारश्चाकारश्च सकारश्च भवति चेत् कुमारललिता नाम वृत्तं भवति । यथा—

मृदुर्मधुरवादी प्रदानमदयुक्तः ।
शुचिस्सुलभचित्तो नरो नरविशेषः ॥

## सोपानं पिज् ॥ १५ ॥

यथा—

जन्म महाम्बुनिधेस्तारयिता तु नृणाम् ।
कारुणिको भगवानस्तु गतिर्जगतः ॥

## उष्णता पौ ॥ १६ ॥

यथा—

ईश्वरः कुरुते चेत्पातकान्यखिलानि ।
तत्र भक्तिविशेषः कं गुणं नु समीक्ष्य ॥

## अनुष्टुप् ॥ १७ ॥

अनुष्टुप् नाम द्वात्रिंशदक्षरं छन्दोऽधिकृतम् ।

## माणवकक्रीडितं त्रु ॥ १८ ॥

माणवकक्रीडितकं नाम वृत्तं भवति पादे पादे त्रुकारश्च भवति चेत् । यथा—

यः सततं शान्तमनाः स्यात्स कथं पानरतः ।
पादरतिस्तस्य मतं माणवकक्रीडितकम् ॥

## हंसरुतं तौ ॥ १९ ॥

तौ इत्यक्षरविन्यासो भवति चेत् हंसरुतं नाम वृत्तं भवति । यथा-

षट्पदवृन्दविकीर्णः कोकिलनादितशाखः ।
भामिनि भाति वसन्ते चूततरुः कुसुमाढ्यः ॥

## पद्मिनी श्रीस् ॥ २० ॥

यथा—

शीतलैरम्बुभिः स्निग्धैः पङ्कजैरुत्पलैः फुल्लैः ।
षट्पदैराकुलैर्हृष्टैः पद्मिनी राजते मधाम् ॥

## बालगर्भिणी ज्ज्ज्ज् ॥ २१ ॥

यथा—

पुरा शरीरमन्तको भिनत्तिरोगसायकैः ।
प्रसह्य जीवितक्षये शुभं महत्समाचरेत् ॥

बृहती ॥ २२ ॥

बृहती नाम षट्त्रिंशदक्षरं छन्दोऽधिकृतम् ।

भुजङ्गशिशुसृता णू ॥ २३ ॥

यथा—

मणिहरितफलाश्चूताः ककुभसुरभयो वाताः ।
विकसितकमला वाप्यो द्रुतमभिपतितो ग्रीष्मः ॥

मणिमध्यं तूल् ॥ २४ ॥

यथा—

न्यायतने संप्रेक्ष्य शिवं पूर्णशशाङ्को प्रीतमनाः ।
चारुतरं ते वक्त्रमिदं भामिनि लीनस्तोयधरे ॥

पङ्क्तिः ॥ २५ ॥

पङ्क्तिर्नाम चत्वारिंशदक्षरं छन्दोऽधिकृतम् ।

शुद्धविराट् सात् ॥ २६ ॥

यथा—

मध्याह्नार्कयुगोपमेक्षणा दीप्तान्युज्वलशूलधारिणी ।
क्रुद्धा शुम्भनिशुम्भसूदिनी त्वच्छत्रूनभिहन्तु कौशिकी ॥

पला ग्द् ॥ २७ ॥

यथा—

निश्शङ्का भव बल्का तेऽहं संबन्धे सति तु भवेत्कोपः ।
यस्याः स्यात्त्वयि खलु सम्बन्धः तस्याः स्यात्प्रणयवशात्कोपः ॥

उपस्थिता सुरी ॥ २८ ॥

यथा—

ज्योत्स्नाप्रसराधिकपाण्डरैरापीतकरः कुमुदाकरैः ।
आवेदयतीव गताम्बुदां चन्द्रः शरदं समुपस्थिताः ॥



## रुक्मवती भौ ॥ २९ ॥

यथा—

स्तोकधनानां सम्प्रति यूनां शोकनिदानो वाति च वायुः ।
पाटलगन्धी नित्यमनोज्ञः कोकिलसङ्घानां मदहेतुः ॥

## मयूरसारिणी रिषू ॥ ३० ॥

यथा—

सविस्तरोमदन्तकेशसूक्ष्मां पाणिपादतालुवक्त्रताम्राम् ।
तां मयूरसारिणीं तु कन्यां यो लभेन्नरः स नन्दतीह ॥

## विलासिता सेर्भौ ॥ ३१ ॥

यथा—

छत्राकारं यदि तु वराङ्गं नेत्रे चोभे कमलदलाभे ।
वक्षः पीनं करचरणौ च श्रीमत्येयं विलसति तस्मिन् ॥

## त्रिष्टुप् ॥ ३२ ॥

त्रिष्टुप् नाम चतुश्चत्वारिंशदक्षरं छन्दोऽधिकृतम् ।

## इन्द्रवज्रा केजू ॥ ३३ ॥

यथा—

अक्षेपमन्दैस्तनुभिस्तरङ्गैः कादम्बपक्षैरभिवाद्यमानाः ।
नद्यः शरत्संभृतसौकुमार्याः कालेन स्त्रिया इव संप्रसेदुः ॥

## उपेन्द्रवज्रा केजू ॥ ३४ ॥

यथा—

नताम्बु मांसी मलयोद्भवानां च चारणानां………… ।
समांशयुक्तो मधुयोजितायं शुभाङ्गि धूपो रतिकेशपाशः ॥

## उभयमिश्रेन्द्रमाला ॥ ३५ ॥

इन्द्रवज्रोपेन्द्रवज्राभ्यां मिश्रा इन्द्रमाला नाम वृत्तं भवति । सा चतुर्दश-

भेदा । आख्यानिकाविपरीताख्यानिकाभ्यां सहार्धसमवृत्ते द्वे व्युदस्यान्येषां द्वादशवृत्तानामुदाहरणानि वक्ष्यन्ते । यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥

सा राजहंसैरिव सन्नताङ्गी गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि ॥

क्वासि कामिन् सरसापराद्धः पादानतः कोपनयावधूतः ।
तस्यां करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥

पर्याप्तपुष्पस्तबकस्तनीभ्यो स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोप्यवापुः विनम्रशाखाभुजबन्धनानि ॥

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

इत्यपृथुत्वं कृशदेहयष्टेर्नितम्बचक्रस्य परं प्रमाणम् ।
इतीव बध्वा रशनागुणेन श्रोणी पुनर्वृद्धिनिषेधतोऽस्याः ॥

विविक्षुरन्तस्सरसीमलङ्घ्यामासाद्य हंसः समुदीक्ष्य वप्रम् ।
ससार नूनं दृढ................कक्षभागच्छदो भार्गवमार्गणस्य ॥

प्राकारमभ्रंलिहमभ्रकोटिमपारमुल्लङ्घयितुं पुरस्तात् ।
यत्रारुणः संहृतवाहरश्मिः तिर्यग्विधत्ते रथमुष्णधाम्नः ॥

आसीदयं चन्द्रमसो विशेषः त्वद्वक्त्रचन्द्रस्य च भासुरस्य ।
बभार पूर्वः सकलङ्कमङ्कं तस्यैव नेत्रद्वितयं द्वितीयः ॥
यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥

सङ्ग्रहश्लोकः ।

अर्धेन मिश्राः षड्भेदाः पादेनाष्टौ द्वयोः क्रमात् ।
इन्द्रमाल्यविभागेन सर्वास्तास्तु चतुर्दश ॥

## दोधकं तान् ॥ ३६ ॥

यथा—

यानि वहन्त्यतिवर्षहतानि व्याकुलकेसरपर्णमधूनि ।
षट्चरणा अपि तानि विसृज्य स्फीतमधूनि न यानि विशन्ति ॥

## शालिनी गेमृ नी ॥ ३७ ॥

यथा—

स्निग्धच्छाया सुप्रसन्नायताक्षी पीनश्रोणी दक्षिणावर्तनाभि ।
संक्षिप्तांसा नातिरोमा नताङ्गी कन्या धन्या नन्दिनी बान्धवानाम् ॥

## वातोर्मिमाला गामृ नी ॥ ३८ ॥

यथा—

हस्ते वक्त्रं परुषा भीरुकेशा वासः क्लिष्टं मलिनं तेऽद्य गात्रम् ।
नेत्रे शुक्ले त्वधरो रागहीनश्चिन्ताशून्यं हृदयं मां दहन्ति ॥

## भ्रमरविलसिता गारु नी ॥ ३९ ॥

यथा—

मुक्ताः केशाः प्रविरलकुसुमाः कर्णासक्तं कुवलयमसितम् ।
वासश्चैकं शशधररुचिरनिभं कोऽस्ते तेऽयं मृगयति रमणम् ॥

## रथोद्धता रभौ ॥ ४० ॥

यथा—

व्योममध्यगतदीप्तमण्डलः प्रस्फुरत्करविकीर्णमण्डलः ।
गां दिधक्षुरिव चोग्रमण्डलः सांप्रतं रविरुदीर्णमण्डलः ॥

## स्वागता रभौ ॥ ४१ ॥

यथा—

स्निग्धदन्तमसितायतनेत्रं चारुपीनशुकतुण्डनिभोष्ठम् ।
वक्त्रमेतदसितं विनतभ्रु प्रेक्षते हि मनुजः स्ववशः स्यात् ॥

## वृत्ताङ्गी णुस् ॥ ४२ ॥

यथा—

शयनमृदितवपुस्त्सूर्ये चपलहृदय किमसि प्राप्तः ।
प्रसरलघुतरमयं जातस्तव च मम च न कथा युक्ता ॥

## श्येनी शिट् ॥ ४३ ॥

यथा—

गम्यतां यथेष्टमेष तेऽञ्जलिस्त्वां चिकित्सितुं कुतो मनोरथः ।
तस्य ते गृहीतरोषया मया पादताडितस्य दौत्यमागतम् ॥

## सङ्गता कुजी ॥ ४४ ॥

यथा—

मही हरितशाद्वलैरावृता घनैरुरुभिराकुलाः पर्वताः ।
जलौघहततीरजाः सिन्धवः प्रिये घनसमागमो वर्तते ॥

## जगती ॥ ४५ ॥

जगती नामाष्टचत्वारिंशदक्षरं छन्दोऽधिकृतम् ।

## वंशस्थं केकी ॥ ४६ ॥

यथा—

तवास्य नीलोत्पलपत्रचक्षुषो मुखस्य तद्रेणुसमानगन्धिनः ।
प्रसन्नचन्द्रप्रियदर्शनस्य मामदर्शनं भामिनि कर्शयिष्यति ॥

## इन्द्रवंशा बेकी ॥ ४७ ॥

यथा—

लुब्धाः शठा नैकृतिका गुणद्विषः कामातुराः स्वार्थपरा दुरासदाः ।
वर्ज्या नराः सद्भिरुदीरिता हितैर्नापीन्द्रवंशप्रभवा गुणप्रियैः ॥

## तोटक लुलु ॥ ४८ ॥

यथा—

ध्रुवमस्ति हि कन्दुक ते हृदयं प्रमदाननसङ्गमलुब्धधियः ।
वनिताकरतामरसाभिहतः पतितः पतितः पुनरुत्पतसि ॥

## पुटो णूहृ नृ ॥ ४९ ॥

यथा—

उपवनसलिलानां बालपद्मैर्भ्रमरमधुकराणां कण्ठनादैः ।
मदनमदविलासैश्चाङ्गनानां जनयति चतुरत्वं पुष्पमासः ॥

## जलोद्धतगतिः कुकु नू ॥ ५० ॥

यथा—

भ्रमन्ति हरिणास्तृषा परिगता न भान्ति गिरयोऽपि शुष्कतरवः ।
दवाभ्युपगमैर्मषीकृततृणां पुनर्दहति गां पटुर्दिनकरः ॥

## कुसुमविचित्रा मृमृ नू ॥ ५१ ॥

यथा—

खमिव सतारं कुसुमविकीर्णं सलिलमगाधं शशिनिभवक्त्रम् ।
विशति शशाङ्कं विपुलतराक्षी जलपिहिताङ्गी जयति तरन्ती ॥

भुजङ्गप्रयातं र्भृ नू ॥ ५२ ॥

यथा—

प्रहृष्टो महेन्द्रः प्रणष्टो निदाघः प्रविष्टोऽन्यपुष्टः प्रहृष्टा भुजङ्गाः।
जलार्द्रा गिरीन्द्रा मदार्द्रा गजेन्द्राः सदर्पा वृषेन्द्राः विवैरा नरेन्द्राः ॥

प्रमिताक्षरा लिलु ॥ ५३ ॥

यथा—

मदमानमोहभुजगावलयं प्रशमाभिरामसुखविप्रलयम् ।
क इवाश्रयेदभिमुखं विलयं बहुदुःखंतीव्रनिलयं निलयम् ॥

द्रुतविलम्बितं माती ॥ ५४ ॥

यथा—

उपगतापि करं परिवादिनी न वदति श्रवणीयमवादिता ।
पुरुष एव हि वादयते प्रियां परभृतामिव चूतनवाङ्कुरः ॥

वैश्वदेवी गूजो नु ॥ ५५ ॥

यथा—

वेगादायान्तीं वीक्ष्य कोशान्तलीनां पङ्क्तिर्मुक्तानां कूजतां षट्पदानाम् ।
आलम्बोदर्याः किञ्चिदाकेकराक्ष्याः तासान्निष्कृष्य त्यज्यते कर्णपूरः ॥

नवमालिनी मितृ ॥ ५६ ॥

यथा—

निपतितमास्यमाकुलितकेशं विरहितमत्तमण्डलकपोलम् ।
सखि विगतोष्ठरागमपनिद्रं कथयति ते वपुः खरविमर्दम् ॥

प्रमुदितवदना नीश् ॥ ५७ ॥

यथा—

अविदितविभवा ध्रुवा व्याधयः प्रतिदिनभयदा तथोग्रा जरा ।
अपरिमितजवो यमोप्यन्तरे शुभमिह किमयुत्र मित्रं विना ॥

## सौदामिनी गाल्रू नी ॥ ५८ ॥

यथा—

नागायन्ते मदजलधाराः शैलाः शैलाः शैलायन्ते दिशि दिशि नीला मेघाः
मेघायन्ते व्युपहतरूपास्तारास्तारायन्ते दिशि दिशि सौदामिन्यः ॥

## अतिजगती ॥ ५९ ॥

अतिजगती नाम द्विपञ्चाशदक्षरं छन्दः ।

## प्रहर्षिणी गको नि ॥ ६० ॥

यथा—

तन्मित्रं त्यजति विपत्सु यन्नमित्रं तज्ज्ञानं प्रशमकरं यदिन्द्रियाणाम् ।
यः पैत्रीं धुरमवलम्बते स पुत्रः सा भार्या पतिहृदयप्रहर्षिणी या ॥

## रुचिता म्रू नी ॥ ६१ ॥

यथा-

ततः शिवं कुसुमितबालपादपं परिभ्रमत्प्रमुदितमत्तकोकिलम् ।
विमानवत्सकमलचारुदीर्घिकं ददर्श तद्वनमिव नन्दनं वनम् ॥

## मत्तमयूरो गजौ ॥ ६२ ॥

यथा—

वातोद्धूतैः कोमलकैः पल्लवहस्तैः पद्मौघानां संवरणं कर्तुमशक्ताः ।
गन्धद्रव्यैः षट्पदचौरैः ह्रियमाणैः कोकूयन्ते कोकिलनादैः सहकाराः ॥

## नन्दिनी ल्रिरै ॥ ६३ ॥

यथा-

शयनोत्थितस्य शिवमादधातु ते मकरालये तिमिविवर्तिताम्भसि ।
वपुरिन्द्रनीलमणिभङ्गसंनिभं पुरुषस्य शेषशयनाधिशायिनः ॥

## भद्रं गादू नी ॥ ६४ ॥

यथा—

इत्येवं द्वौ द्विषि समवयुतौ कृत्वा पञ्चोपायैर्ग्रहणविधिरयं प्रोक्तः ।
अस्मादूर्ध्वं वशमुपनयितुं नागान् कर्मस्कन्धेष्वयमृषिविहितो मार्गः ॥

## शक्करी ॥ ६५ ॥

शक्करी नाम षट्पञ्चाशदक्षरं छन्दः ।

## असंबाधा म्रणू नु ॥ ६६ ॥

यथा—

हस्तावष्टब्धं मुखमिदमनलंकारं सास्रे संरक्ते भ्रुकुटिविरहिते नेत्रे ।
स्वैरं चासीना प्रवदसि न च मा किञ्चिद् भावः कस्तेऽयं सुतनु मयि चिरप्राप्ते ॥

## अपराजिता णीरी नृ ॥ ६७ ॥

यथा—

अनिभृतनयनं सविभ्रममाननं कृशदशनपदं स्तनद्वयमुन्नतम् ।
प्रशिथिलरशनं महज्जघनं च ते सुतनु किमनलंकरिष्यसि मण्डनम् ॥

## प्रहरणगलिता दुदु नृ ॥ ६८ ॥

यथा—

अनियतरुदितं स्मितमिव हसवाक् जलगुरुनयनं शुभवशगतवत् ।
परिभवभवनं भवति च नियतं यदुपहतमतिस्तदिदमिह घटे ॥

## वसन्ततिलकं बाकिस् ॥ ६९ ॥

यथा—

पश्य भ्रुवोर्गतिमिहाप्यनुसर्तुमिच्छन्नेतद्विभाति नयनद्वयमायताक्ष्याः ।
श्रोणीपयोभरगतां गुरुतां च बिभ्रज्जिज्ञासया तुलयतीव हि मध्यमस्याः ॥

**इन्दुमुखी सैतवस्य ॥ ७० ॥**

इदमेव वसन्ततिलकमिन्दुमुखी नाम वृत्तं भवति सैतवस्याचार्यस्य मतेन ।

**सिंहोन्नता काश्यपस्य ॥ ७१ ॥**

इदमेव वसन्ततिलकं सिंहोन्नता नाम वृत्तं भवति काश्यपस्याचार्यस्य मतेन ।

**विलासिनी तिलस् ॥ ७२ ॥**

यथा—

कुञ्जरकरोडुपभुजाननमनूनं मन्दरशिलातलसमोरसमुदारम् ।
अञ्जननिभैकरुहकुञ्चितसुकेशं तं जिनमहं जितकलिं सुगतमीडे ॥

**अतिशक्करी ॥ ७३ ॥**

अतिशक्करी नाम षष्ट्यक्षरं छन्दः ।

**चन्द्रावर्ता ण्णु ॥ ७४ ॥**

यथा—

अतिरुचिररुचिरसममसितघनं विकसितकमलदलरुचिमदधरम् ।
तव सुमुखि मुखकमलमिदमसितं जनयति खलु सुतनु मदनमतुलम् ॥

**माला नू सैव ॥ ७५ ॥**

सैव चन्द्रावर्ता षष्ठेऽक्षरे यतिश्चेन्माला नाम वृत्तं भवति ।

यथा—

शशिनिभमुखि तव भवतु सह मया कृतकरुचिरतनु तनुरपि कलहः ।
तव च रमणि किमपरिचित इव मां समसितदति परुषयति परिजनः ॥

**मणिगुणनिकरो नृ ॥ ७६ ॥**

सैव चन्द्रावर्ता अष्टमेऽक्षरे यतिर्भवति चेन्मणिगुणनिकरो नाम वृत्तं भवति ।

यथा—

कमलरुचिरमुखि गणयसि सुभृशं त्वमसि रमणि मयि सुविमलहृदयम् ।
कमलरुचिरतनु किमिदमसदृशं विमलशिखरदति वद यदपकृतम् ॥

**मालिनी णू ड्टू नृ ॥ ७७ ॥**

यथा—

परभृतकुलनीलाः पर्वतोत्तुङ्गशृङ्गाः स्फुरदुरुतरविद्युद्भङ्गपिङ्गाङ्गरागाः ।
पटहमधुरमन्द्रध्वानिनः सेन्द्रचापा निखिलमनिलमार्गं नीरदाश्छादयन्ति ॥

**अष्टिः ॥ ७८ ॥**

अष्टिर्नाम चतुःषष्ट्यक्षरं छन्दः ।

2630

**ऋषगजविलसिता तीदल नृ ॥ ७९ ॥**

यथा—

एष सरः प्रसन्नमनवरतखगरुतं पद्मकृतोत्तरीयमुभयतटरुहवनम् ।
यूथपतिर्विहर्तुमभिपतति दिनकरोऽप्युद्धतपांसुरूक्षमपनयति गजकुलम् ॥

**ललना पाणु नृ ॥ ८० ॥**

यथा—

चारु भीरु निशितशुभसितसमदशनं लोकलोचनहरमभिनवकमलनिभम् ।
भाति भामिनि तव कुवलयदलनयनं सूनसुभ्रुवदनमतिशुभमिदममलम् ॥

**चन्द्रलेखा दीमीशू ॥ ८१ ॥**

यथा—

सरल वयं श्रिताद्य निलयं स्फुरत्पद्मकं
जरयति यस्य च स्तुतिपरो विषं पद्मकम् ।
तमचलभेदनिःसृतमनःशिलाकुङ्कुमं
नमत दधानमायतविषाणशंकुंकुमम् ॥

**अत्यष्टिः ॥ ८२ ॥**

अत्यष्टिर्नामाष्टषष्ट्यक्षरं छन्दः ।

**हरिणी म्लुश्री नूनी ॥ ८३ ॥**

यथा—

स्मरदुरवनं छत्राभोगस्फुटश्वसनध्वनिः
सविषविषमा दंष्ट्राटोपश्चलद्विषमेक्षणः ।
विवृतदशनश्चण्डांजिह्वा दिधक्षुरुपागतो
भुजगपतिरव्यग्रक्रोधो मुने शमितस्त्वया ॥

**शिखरिणी ह्मभूल्पु नू ॥ ८४ ॥**

यथा—

न वक्त्रं संरम्भादधरमणिसन्दंशकलुषं
न बाहुर्निष्कृष्टः स्फुरदसिमयूखैरनुसृतः ।
शरीरं नाकर्णस्थितवरधनुर्मण्डलगतं
स भग्नश्चानङ्गो जय विधिरपूर्वो भगवतः ॥

**पृथ्वी क्लिरृशी ॥ ८५ ॥**

यथा—

असंभृतपयोधरामभलचन्द्रसौम्याननां
श्रमेण महता गतो मदनबाणवेगातुरः ।
परिष्वजति पीडितं रहसि यः प्रसुप्तां प्रियां
मृतोऽपि स न बन्धुभिः समनुशोचनीयो नरः ॥

**वंशपत्रपतितं तीमारु नू ॥ ८६ ॥**

यथा—

पुष्पसमुज्ज्वलाः कुरवका नदति परभृतः
कान्तमशोकपुष्पसहितं चलति किसलयः ।

चूतसुगन्धयश्च पवना भ्रमररुतवहाः
संप्रति काननेषु सधनुर्विचरति मदनः ॥

## मन्दाक्रान्ता सेरुशो नीनु ॥ ८७ ॥

यथा—

बाला तन्वी मृदुरियमिति त्यज्यतामत्र शङ्का
दृष्टा नैव भ्रमरभरतो मञ्जरी भज्यमाना ।
तस्मादेषा रहसि भवता निर्दयं पीडनीया
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समस्तम् ॥

## धृतिः ॥ ८८ ॥

धृतिर्नाम द्विसप्तत्यक्षरं छन्दः ।

## कुसुमितलता स्सायृशो नु ॥ ८९ ॥

यथा—

आमोदामत्तोद्भ्रमरनयना प्रस्फुरत्पल्लवोष्ठी
पुष्पव्यापाण्डुः परभृतरुतव्यक्तरक्तप्रगीता ।
नृत्तोत्क्षिप्तांसा प्रचलिततरा भाति कान्तेव मत्ता
वायुव्याघूर्णा कुसुमितलतावेल्लिता चूतयष्टिः ॥

## अतिधृतिः ॥ ९० ॥

अतिधृतिर्नाम षट्सप्तत्यक्षरं छन्दः ।

## शार्दूलविक्रीडितं गुकुसृज् नै ॥ ९१ ॥

यथा—

यस्यां मत्तवरेभकुम्भदलनस्थूलप्रहारा रणे
वीराः संहतिदन्तिदन्तकषणक्षुण्णोरुवक्षःस्थलाः ।
बद्धाच्छादसिधेनुसत्कटितटारम्योज्ज्वलद्भूषणा
राजद्वारमुपागता विदधते शार्दूलविक्रीडितम् ॥

**वायुवेगा गुकुदु नै ॥ ९२ ॥**

यथा—

नीलैर्विद्युदलंकृतोरुशिखरैर्विपुलजलधरै-
व्योमच्छन्नमुदारधीरनिनदैः क्षरदमृतलवैः ।
केकारावमिदं विमुञ्चति मुदा भुजगरिपुकुलं
संप्राप्ते जलदागमेऽतिशिशिरो विरचति पवनः ॥

**कृतिः ॥ ९३ ॥**

कृतिर्नामाशीत्यक्षरं छन्दः ।

**सुवदना ग्शादृदू नृन् ॥ ९४ ॥**

यथा—

तत्पीतं हन्ति संज्ञां कलुषयति वचो बुद्धिं भ्रमयति
ह्रीधर्मौ प्रच्छिनत्ति स्मृतिमपहरति द्वेषं जनयति ।
मुष्णाति प्रीतिमग्र्यां मलिनयति मतिं वृत्तं तुलयति
तन्मोहात्पानसंज्ञं यदि पिबति नरो मृत्युं स पिबति ॥

**वृत्तं शिशिशिपू ॥ ९५ ॥**

यथा—

पुष्पपल्लवोज्ज्वलेषु पद्मषण्डमण्डितेषु मत्तकोकि-
लालिकूजितेषु सार्धमेव माधवेन यो नरो जघान ।
मीनशत्रुमायतेन मायतेन सायकेन सन्नताङ्गि
सज्यचापबाणपाणिरब्जचारुलोचने ससम्भ्रमीव ॥

**प्रकृतिः ॥ ९६ ॥**

प्रकृतिर्नाम चतुरशीत्यक्षरं छन्दः ।

**स्रग्धरा गोदुशो नृर् ॥ ९७ ॥**

यथा—

दन्ताग्रप्रोतचञ्चुद्युतिदनुतनयास्रग्वसादिग्धदेहो
यो भात्याजौ प्रधावद्‌जनगिरिरिवासक्तसन्ध्याभ्रलेखः ।

सोऽव्यादैरावतो वः स्वकटघटतटप्रक्षरद्दानधारा-
स्वादोन्मत्तप्रहृष्टभ्रमरगुमुगुमारावकोलाहलाख्यः ॥

**आकृतिः ॥ ९८ ॥**

आकृतिर्नामाष्टाशीत्यक्षरं छन्दः ।

**मद्रकन्ती यिलुकनै ॥ ९९ ॥**

यथा—

मृत्युपरायणे परमदुर्बले जगति तोयबुद्बुदसमे
व्याधिजरात्मके व्यसनभाजने रुदितशोकशल्यविहते ।
क्रन्दितमूर्ध्वभोजवसि निघ्नधीरिह च यत्र नोभयशतं
तत्र गतव्यधो विषयगोचरो गमयसीन्द्रियाणि किल नः ॥

**अस्यैव न्नू पिङ्गलस्य ॥ १०० ॥**

अस्यैव मद्रकस्य दशमेऽक्षरे यतिर्भवति पिङ्गलस्याचार्यस्य मतेन ।

**निकृतिः ॥ १०१ ॥**

निकृतिर्नाम द्विनवत्यक्षरं छन्दः ।

**अश्वललितं दीमीयिल् कुने ॥ १०२ ॥**

यथा—

मरकतशैलभित्तिसदृशोर्मिपातचलितप्रवालविटप-
प्रकुपितभीमनक्रमकरक्षुतक्षुभितवारिवारणझषः ।
विविधविकीर्णरत्नकिरणातपच्छुरितनिर्मलोदरजलं
सजलपयोदगर्जितरवं स पालयतु वः कुलं जलनिधिः ॥

**मत्ताक्रीडा स्गूण्णु न्टृ ॥ १०३ ॥**

यथा—

विद्युन्नद्धं खं नष्टार्कं स सुरपतिधनुरुपनतजलधरं
शष्पश्यामा रम्याः शैला द्रुतमुपलविवरनिपतितसलिलाः ।

वृक्षाकम्पो वायुश्चण्डः परिपतनशिशिरजलवृषभयुतः
फेनैः शुक्लैः कीर्णा नद्यो नवसलिलविसरसमुपहततटाः ॥

## संकृतिः ॥ १०४ ॥

संकृतिर्नाम षण्णवत्यक्षरं छन्दः ॥

## तन्वी तेमुत्तङ् सु नृ नू ॥ १०५ ॥

यथा—

कामवशार्तस्तव सखि रमणः सम्प्रति शुष्यति निशि शशिपादैः
विह्वलगात्रः प्रपतति शयने निःश्वसिताकुलविगलितधैर्यः ।
प्राञ्जलिनोक्तः प्रणमितशिरसा साध्ववधारय रमणवचस्त्वं
मा तव कोपोज्वल वररिपुहा धक्ष्यति मामिति कथयति तन्वी ॥

## मेघमाला णीश्शीशी ॥ १०६ ॥

यथा—

चलकिसलयशोभिताशोकसालप्रियालाम्रपुन्नागनागादिभि-
स्तरुभिरलभिरुज्ज्वलैर्मत्तपुंस्कोकिलोन्नादितैर्भूषितं काननं ।
विकसितकमलोत्पलामोदगन्धोत्कटो वात्ययं दाक्षिणात्योऽनिल-
स्तव सुतनु समाहितः कामसन्दीपनः काल एष प्रिये सुन्दरि ॥

## अभिकृतिः ॥ १०७ ॥

अभिकृतिर्नाम शताक्षरं छन्दः ।

## क्रौञ्चपादा जौण्णु नुन्न ॥ १०८ ॥

यथा—

प्रोल्बणदर्पोद्धृतममन्तं भ्रमदुरुनिभकरि(कर)वरकलिलं
प्रज्वलितास्त्रप्रेङ्खितरौद्रद्रुततरगतिपरभयकुलबहुलं ।
सिंहविगर्जद्द्वीपिविकीर्णं हरिरिव मृगगणमरिगणमपभीः
स त्वमनन्यो द्रावयसीति प्रचरति भुवमुरु तव नृवर यशः ॥

## उत्कृतिः ॥ १०९ ॥

उत्कृतिर्नाम चतुश्शताक्षरं छन्दः ।

## भुजङ्गविजृम्भितं स्गूणक्ती नृने ॥ ११० ॥

यथा—

कोऽसि त्वं मे का वाहं ते विसृज शठ मम निवसनं मुखं किमवेक्षसे
न व्यग्राहं जाने हीही तव सुभग दशनवसनं प्रियादशनाङ्कितम् ।
या ते रुष्टा सा ते नाहं व्रज चपलहृदय निलयं प्रसादय कामिनी-
मित्येवं वः कन्दर्पार्ताः प्रणयकृतकलहकुपिता वदन्तु वरस्त्रियः ॥

## अपवाहकं ग्मण्णुस् निनू ॥ १११ ॥

यथा—

भ्राजन्ते भ्रमदलिकुलमुदितविहगमधुरविरतरुचिरा वाप्यः
हंसैः संक्षुभितकमलकुवलयविलुलितविमलसुसलिलाः पूर्णाः ।
वात्येष प्रमदवनपवनजवरत[तरुगण]कुसुमसुरभिरनिलो मन्दः
प्राप्तोऽयं समदमदनमनुजहृदयदयितः कालः ? ॥

## दण्डकाः ॥ ११२ ॥

अधिकारोऽयं इत ऊर्ध्वं यद्वक्ष्यामः तद्दण्डकसंज्ञं भवति ।

## स्गूणश्री जलदः ॥ ११३ ॥

जलदाख्यो दण्डको भवति प्रतिपादं स्गूणश्री इत्यक्षरविन्यासो भवति चेत् ।

## मध्ये द्वृद्धया मेघपिपीलिकापणवकरभललितानि ॥ ११४ ॥

जलदाख्यस्य दण्डकस्य मध्ये दकारवृद्धया यथाक्रमं मेघः पिपीलिका पणवः
रभः ललितमिति एते पञ्च दण्डकानि भवन्ति । एतदुक्तं भवति । जलदस्यैकः
ादः त्रिंशदक्षरः, मेघस्य चतुस्त्रिंशत, पिपीलिकाया अष्टत्रिंशत्, पणवस्य द्विचत्वारिंशत्
रभस्य षट्चत्वा रिंशत ललितस्य पञ्चाशदक्षरः, एवं षट् दण्डका भवन्ति ।
षामन्त्यस्योदाहरणम्—

येन प्रांशुं क्रौञ्चस्याग्रं मणिकनकविमलनवरजतपटलहरवृषभसकलशशिकिरण-कुमुदसदृशं सिताम्बुजसन्निभं, भिन्नं शक्त्या लीलावत्यास्तटविटपकुटजसितपनसति-निशधवखदिरतिलकतरुगहनललितशिखरं लतागृहसङ्कटं, क्रीडाभूमिर्गन्धर्वाणां गजगव-यमहिषरुरुपृषतशरभमृगमिथुनपरमबहुविविधशकुनिचरितं विपद्दुतकिन्नरं, सोऽरीन्-दोर्भिर्देवो रोषात्तृषित इव पिबतु दहन इव दहतु पवन इव वहतु तरुणरवि-सदृशवदनो मयूरवरध्वजः ॥

**तदधिको निचितः ॥ ११५ ॥**

तेभ्योऽधिकस्तज्जातीयो निचिताख्यो दण्डको भवति ।

**चण्डवृष्टिप्रयातो णीश्शीश्शी ॥ ११६ ॥**

चण्डवृष्टिप्रयातो नाम दण्डको भवति प्रतिपादं णीश्शीश्शी इत्यक्षरविन्यासो भवति चेत् । यथा——

मुदितजनपदाकुला स्फीतसस्याकुला भूतधात्री भवन्तं समभ्यर्चति, द्विरदक-रविलुलहिन्तालतालीवनास्त्वां नमस्यन्ति विन्ध्यादयः पर्वताः, स्फुटितविमलशुक्ति-नीर्गीर्णमुक्ताफलैरूर्मिहस्तैर्नमस्यन्ति वः सागराः, मुदितजनपदाकीर्णकूलाश्च ते कीर्तयिष्यन्ति वर्णं महानिम्नगाः ॥

**श्वृद्ध्यार्णवार्णव्यालजीमूतलीलाकरोद्दामसिंहसमुद्रभुजङ्गाः ॥ ११७ ॥**

चण्डवृष्टिप्रयाताख्यस्य दण्डकस्य पादे पादे क्रमशः शकारवृद्ध्या अर्णवः अर्णः प्लवः व्यालः जीमूतः लीलाकरः उद्दामा सिंहः समुद्रः भुजङ्गः इत्येते दश दण्डका भवन्ति । तत्रार्णवस्य पादे णकारात्परतः अष्टौ शकारा भवन्ति । अर्णस्य नव प्लवस्य दश व्यालस्य एकादश जीमूतस्य द्वादश लीलाकरस्य त्रयोदश उद्दाम्नश्चतुर्दश सिंहस्य पञ्चदश समुद्रस्य षोडश भुजङ्गस्य सप्तदश । एवमेते च दश दण्डका भवन्ति ॥

**शेषाः प्रचिताः ॥ ११८ ॥**

उक्तेभ्यो दण्डकेभ्यः शकारवृद्ध्या येऽधिका दण्डकाः प्रचिता नाम ते भवन्ति । येषां पादे पादे अष्टादश एकोनविंशतिः ततोऽधिका वा शकारवृद्ध्या भवेयुश्चेत्त एव शेषाः प्रचिताख्या दण्डका भवन्तीति । तत्रार्णवो यथा——

वर इह न करिष्यति त्वन्निर्मित्तं नापि चान्यैः कृतं लभ्यते स्वस्वश्रमो भुज्यते, न च भवति कृतस्य नाशो नचैवाकृतस्यागमो विद्यते बीजमुप्त्वा फलं प्राप्यते, कृतमिति हृदयेन तुष्टेन मृत्युः सुखं दृश्यते नह्यकृत्वा भवेत्स्वस्ति तस्मिन् भवे, कुरु कुशलमलं प्रमादेन गृण्हीष्व दीपं प्रवेष्टव्यमेकेन दीर्घं ह्यनन्तं तमः ॥

अर्णो यथा—

शरणमनलसूर्यवायुप्रतीघातनष्टाजवं तर्षमाछेत्तुमन्नं क्षुधं शौचमौगं मलं, वसनमपि शरीरकौपीनदोषप्रतिच्छादनार्थं गतिक्लेशनाशा च यानादयो विस्तराः, शिशिरशमनमुष्णमुष्णप्रणाशाय शीतो विधिर्गात्रविश्रान्तिहेतोश्च शय्यासनापाश्रयाः, पुरुषगुणमिमं परित्रातुमार्त्तैश्चिकित्सेयमारभ्यते यत्र भोगार्थसंज्ञा नृणां जायते ॥

प्लवो यथा—

जलनिधिवसनापि भूर्यस्य कस्यैक एकाधिवासः पुरं तत्र चैकं गृहं तद्गृहे चैक एवालयो, निवसनयुगमेकमेवात्मकौपीनशाट्यर्थमेकैव शालानिवर्ति वृत्तितत्सर्वथा मुक्तभावः सुखः(?) ॥

शेषाणामुदाहरणानि ग्रन्थविस्तरभयान्नोदाहृतानि । तान्यपि काव्येषु सूत्रालङ्कारादिषु द्रष्टव्यानि ॥

इति जानाश्रय्यां छन्दोविचित्यां समवृत्ताध्यायश्चतुर्थः ॥



श्रीः

## अथ पञ्चमोऽध्यायः ॥

वृत्तान्युक्तानि । इदानीं जातयो वक्ष्यन्ते । वक्ष्यति भवान् जातीति । इदं तावदुच्यतां जातिवृत्तयोः किं नानात्वमिति । अत्रोच्यते—जातिरेकाप्यनेकस्मिन् छन्दसि भवति, वृत्तमेकमेकस्मिन्नेव, इदमनयोर्नानात्वम् । सात्वनेकस्मिन् छन्दसि वर्तमानापि मात्रालक्षणतः तुल्यजातीयैव । तत एवोच्यते जातिरिति ।

## उत्कृतिः ॥ १०९ ॥

उत्कृतिर्नाम चतुश्शताक्षरं छन्दः ।

## भुजङ्गविजृम्भितं स्गूणत्की नृ्ने ॥ ११० ॥

यथा—

कोऽसि त्वं मे का वाहं ते विसृज शठ मम निवसनं मुखं किमवेक्षसे
न व्यग्राहं जाने हीही तव सुभग दशनवसनं प्रियादशनाङ्कितम् ।
या ते रुष्टा सा ते नाहं व्रज चपलहृदय निलयं प्रसादय कामिनी-
मित्येवं वः कन्दर्पार्ताः प्रणयकृतकलहकुपिता वदन्तु वरस्त्रियः ॥

## अपवाहकं म्भण्णुस् निनू ॥ १११ ॥

यथा—

भ्राजन्ते भ्रमदलिकुलमुदितविहगमधुरविरतरुचिरा वाप्यः
हंसैः संक्षुभितकमलकुवलयविलुलितविमलसुसलिलाः पूर्णाः ।
वात्येष प्रमदवनपवनजवरत[तरुगण]कुसुमसुरभिरनिलो मन्दः
प्राप्तोऽयं समदमदनमनुजहृदयदयितः कालः ? ॥

## दण्डकाः ॥ ११२ ॥

अधिकारोऽयं इत ऊर्ध्वं यद्वक्ष्यामः तद्दण्डकसंज्ञं भवति ।

## स्गूण्णश्री जलदः ॥ ११३ ॥

जलदाख्यो दण्डको भवति प्रतिपादं स्गूण्णश्री इत्यक्षरविन्यासो भवति चेत् ।

## मध्ये द्वृद्ध्या मेघपिपीलिकापणवकरभललितानि ॥ ११४ ॥

जलदाख्यस्य दण्डकस्य मध्ये दकारवृद्ध्या यथाक्रमं मेघः पिपीलिका पणवः करभः ललितमिति एते पञ्च दण्डकानि भवन्ति । एतदुक्तं भवति । जलदस्यैकः पादः त्रिंशदक्षरः, मेघस्य चतुस्त्रिंशत्, पिपीलिकाया अष्टत्रिंशत्, पणवस्य द्विचत्वारिंशत् करभस्य षट्चत्वारिंशत ललितस्य पञ्चाशदक्षरः, एवं षट् दण्डका भवन्ति । एषामन्त्यस्योदाहरणम्—

## युक्पादे न णः ॥ ७ ॥

सोपजातेर्वैतालीयस्यादौ युक्पादे नैव णकारो भवति अयुक्पादे न विधिर्न प्रतिषेधः तस्मात्तत्र भवति वा न वा ।

जलधरपटलान्तनिस्सृतः समये दीप्तमयूखमण्डलः ।
प्रविततितिमिरः प्रभेदकं नभसः क्रुद्ध इवोत्थितो रविः ॥

अयुजि यस्मिन् पक्षे णकारो न भवति तस्योदाहरणम्—

मृदुतामुपयान्ति मारुताः प्रलयं यान्ति शनैर्बलाहकाः ।
पुनरागतहंससारसा शरदाक्रामति वार्षिकीं श्रियम् ॥

## युजि चतुर्थेनोत्तरः साकं प्राच्यवृत्तिः ॥ ८ ॥

तस्यैव सोपजातेर्वैतालीयस्यादौ युक्पादे चतुर्थेन लघुना सार्धमुत्तरा लघुर्मिश्रितो भवति चेत् प्राच्यवृत्तिर्नाम भवति । यथा—

पुलिनैः प्रतिभान्ति निम्नगाः सारसाग्रचरणाङ्ककर्दमैः ।
कलहंसविकीर्णमेखलाः कान्तभुक्तजघना इव स्त्रियः ॥

## अयुज्यपरान्तिका ॥ ९ ॥

तस्यैव वैतालीयस्यादौ अयुक्पादेऽपि चतुर्थेन लघुना सार्धमुत्तरः पञ्चमो लघुर्मिश्रितो भवति चेदपरान्तिका नाम भवति । यथा—

विघाटितपयोधरार्गलं निर्मलोज्वलशशाङ्कमण्डलम् ।
दिवाकरमरीचिसंक्षये धौतहर्म्यमिव लक्ष्यतेऽम्बरम् ॥

सोपजातेर्वैतालीयस्योक्तत्वात् प्राच्यवृत्त्यपरान्तिकोदीच्यवृत्तिदक्षिणान्तका-प्रसक्तानि औपच्छन्दसिकापातलिकयोरपि भवन्ति । तत्रौपच्छन्दसिकप्राच्यवृत्तिर्यथा—

अभिवीक्ष्य नितान्तताम्रपद्मं संप्रदीप्तमिव केचिदभ्रखण्डम् ।
न भयादुपयान्ति वारणेन्द्रा दाववह्निचकिताः समुन्नदन्तः ॥

औपच्छन्दसिकापरान्तिका यथा—

द्यौर्विभाति पूर्णचन्द्रवक्त्रा प्रोन्मिषद्विविधतारकाकुलाक्षा ।
चन्द्रिकादुकूलसंवृताङ्गी कन्यकेव हि विवाहवेषयुक्ता ॥

औपच्छन्दसिकोदीच्यवृत्तिर्यथा—

नवाम्बुधरवृन्दचुम्बितालकाग्रा भान्ति सांप्रतं जलाशया ।
हंसचक्रवाकांसकम्पितैः प्रदीप्तकाननोपमाः पङ्कजैर्विबुद्धैः समाकुलाः ॥

**द्वितीयेनोदीच्यवृत्तिः ॥ १० ॥**

अस्यैव सोपजातेर्वैतालीयस्यादावयुक्पादे द्वितीयेन लघुना उत्तरस्तृतीयो लघुर्मिश्रितो भवति चेत् उदीच्यवृत्तिर्नाम भवति । यथा—

मनोज्ञमपि सिन्दुवारकुसुमाग्र्यं च षट्पदः ।
न सेवति तुषारशङ्कितश्चन्द्रालोकविशेषशीतलम् ॥

**युज्यपि दक्षिणान्तिका ॥ ११ ॥**

तस्यैव सोपजातेर्वैतालीयस्यादौ युक्पादेऽपि द्वितीयेनोत्तरस्तृतीयो लघुर्भवति चेत् दक्षिणान्तिका नाम भवति । यथा—

कदम्बगन्धोल्बणावनिः प्रवान्ति केसरयूथिकानिलाः ।
सतोयभरलम्बिनो घनाः भ्रमन्ति मुदितरवा जलागमे ॥

**प्रवर्तकं प्राच्योदीच्यवृत्तिभ्याम् ॥ १२ ॥**

प्रवर्तकं नाम भवति प्राच्योदीच्यवृत्तिभ्यां भवति चेत् । यथा—

जलदोन्मत्तमयूरभूषिताग्रा बिन्दुजितनीलविद्रुमाग्राः ।
गिरयस्सर्जकदम्बवासिताग्राः ॥

औपच्छन्दसिकदक्षिणान्तिका यथा—

गुणैरनुरमैर्वसन्तकालो मनो हरति नृणां मनोज्ञरूपः
प्रपुष्टपरपुष्टवृन्दपोषः प्रबुद्धकमलामोदबोधितालिः ॥

औपच्छन्दसिकप्रवर्तकं यथा—

दिवाकरमरीचिसंप्रतप्ता दाववह्निपरितप्तगुल्मधूम्रा ।
जलैर्भववलाहकाभिवृष्टैरुच्छ्वसन्त इव भान्ति पर्वतेन्द्राः ॥

आपातलिकायाश्चोदाहरणान्येवं ज्ञेयानि । वैतालीयजातिः सोपजातिरुक्ता । इदानीं मात्रासमकजातिर्वक्ष्यते ।

**गणाश्चत्वारो मात्रासमकम् ॥ १३ ॥**

अयुक् पादे युक्पादे च गणाश्चत्वारो भवन्ति चेन्मात्रासमकं नाम भवति ।

**स्व वान्त्यम् ॥ १४ ॥**

तस्यैव मात्रासमकस्यान्त्यो गणः सकार ऊकारो वा भवति ।

**तृतीयो ल् ॥ १५ ॥**

तस्यैव मात्रासमकस्यायुक् पादे युक्पादे च गणस्तृतीयो ल्कारो भवति ।

अश्मश्रुमुखैर्विषमैर्दन्तैर्गम्भीराक्षैर्वलिनासाग्रम् ।
निर्मांसहनुस्फुटितैः केशैः मात्रासमकं लभते दुःखम् ॥

**क वानवासिका ॥ १६ ॥**

तस्यैव मात्रासमकस्यायुक्पादे युक्पादे च तृतीयो गणो क्कारो भवति चेत् वानवासिका नाम भवति । यथा—

वद किं कमलासि भीरु लक्ष्मि मा चन्द्रप्रभारतिर्भूयाः ।
वामतनुरथापरासि साक्षात्प्रमदान्या वानवासिका त्वम् ॥

**विश्लोको द्वितीयदिः ॥ १७ ॥**

तस्यैव मात्रासमकस्यायुक्पादे युक्पादे च द्वितीयो दकार इकारो वा भवति विश्लोको नाम भवति । यथा—

नष्टेन्द्रचापविद्युत्पदान्धकारा विकीर्णहारं समये ।
निस्तोयधरगतरवं राजति विश्लोकवृत्तविमलं गगनम् ।

**तृतीयश्च ययोर्दिल् वा चित्रा ॥ १८ ॥**

तस्यैव मात्रासमकस्य तृतीयो द्वितीयश्च दकारो वा लकारो वा इकारो वा भवति चेत् चित्रा नाम भवति । यथा—

पद्मप्रियङ्गुनिभामलाङ्गी पीनस्तनी कृशचारुमध्या ।
विभ्राजतेऽक्तलेन्द्रयूना चित्रा यथोपतिना विचित्रा ॥

**सा चोपचित्रा ॥ १७ ॥**

तस्यैव मात्रासमकस्यायुक्पादे युक्पादे च तृतीयगणो द्वितीयश्च सकारो वा आकारो वा भवति चेदुपचित्रा नाम भवति । यथा—

पल्लवशाटकसंपदङ्गीपदङ्गीभिर्मामरकुलकुसुमाढ्या शाखा ।
वाहल्तानिल्लालावेगा नृत्यति वै सहकारलतेयम् ॥

**एभिः पादाकुलकम् ॥ १८ ॥**

एभिर्वानवासिकाविश्लोकचित्रोपचित्रालक्षणैरेकस्मिन् रूपे सह संभूतै पादाकुलकं नाम भवति । यथा—

अम्भोभारप्रलम्बबिम्बा बृन्दं प्रयान्ति गगने जलदाः ।
नृत्यच्छिखण्डिकर्चिताः शैला संकीर्णाभिर्गोपकसंधैः ॥

**अभा गीत्यार्या ॥ १९ ॥**

मात्रासमकस्यैव पादा गुरुविरहिता भवन्ति चेत गीत्यार्या नाम भवति यथा—

वकुलकुमुदकुवलयनवपटुमधुकरविरचितकमलमतिसुरभि-
सलिलमिदमसितपटनिभमतितनुशिखरदति शरदिति कथयति ॥

**शिखार्धे भाः ॥ २० ॥**

गीत्यार्याया एवार्धे गुरवो भवन्ति चेच्छिखा नाम । यथा—

कादम्बानां पक्षोद्धूतैः पद्मैः कीर्णैराक्रोशद्भिः ।
सलिलमिदमसितपटनिभमतितनुशिखरदतिशरदिति कथयति ॥

## चूलिका ण्णणय् ॥ २१ ॥

चूलिका नाम भवति अर्धे एते गणा भवन्ति चेत् । यथा—

वरयुवतिहृतहृदय किमसितसुरतसुरभि भवसि मम च गृहम् ।
खल विरम पुरथ वरयुवतिजघनगतमसि भवति नय च शुभम् ॥

## ह्राधिका तारा ॥ २२ ॥

इयमेव चूलिका अर्धे एकेन लघुनाधिका भवति चेत्तारा नाम भवति । यथा—

चलशिथिलधृतिषु बहुविकृतगतिषु दुर........गमतिषु शठकृतिषु ।
बहुविधमशुभमु........ हृदय किमिति विगणयसि करितयुवतिषु ॥

मात्रासमकजातिः सोपजातिरुक्ता । इदानीमार्याजातिः सोपजातिर्वक्ष्यते ।

## सप्तार्धे चार्याया गणाः ॥ २३ ॥

इति चार्ध इति चानुवर्तते । अतोऽर्धे सप्त गणाः गणस्यार्धम् । ........वति तस्य गणस्य यः पूर्वो गणः षष्ठः तस्यान्त्येऽक्षरे यतिर्भवति । यथा- —

व्याकोशकुमुदतारकविलीनविमलेन्द्रनीलसमसलिलाः ।
हंसकदम्बकचन्द्राः शरन्नलिन्यो द्युवद्भ्रान्ति ॥

## परार्धे पञ्चमश्च ॥ २५ ॥

परार्धे पञ्चमश्च गणो यदि दकारो भवति तस्य गणस्य यः पूर्वो गणश्चतुर्थः तस्यान्त्येऽक्षरे यतिर्भवति । यथा—

दिनकरदीधितिबोधितसरसिजमकरन्दसदशनः शरदि ।
नूपुररवमनुकुर्वन्कूजति मदमुदितकलहंसः ॥

## षष्ठो ह्रः ॥ २६ ॥

आर्यायाः परार्धे षष्ठो गणो ह्रकार एव केवलो भवति ।

## पथ्योभयोस्त्रिः ॥ २७ ॥

यतिरनुवर्तते मण्डूकप्लुत्या। आर्याया उभयोरप्यर्धयोस्तृतीये गणे यतिर्भवति चेत् पथ्या नाम भवति।

यथा—

चारित्रनिर्मलजलः सत्पुरुषनदो क्षयो भवतु नित्यम्।
यस्य विभवारविन्दे मित्रभ्रमराः कृतविहाराः ॥

## विपुलान्या ॥ २८ ॥

या पथ्यालक्षणाया आर्याया अन्या आर्या सा विपुला नाम भवति। एतदुक्तं भवति। तृतीये गणे उभयोरप्यर्धयोर्यस्या न यतिर्जाता सा विपुला नाम भवति। यथा—

आपाण्डुरेति शिथिलेति लम्बालकेति मलिनेति।
मा कथय चन्द्र याचे परविषयगतस्य कान्तस्य ॥

## द्वितीयचतुर्थौ भामध्ये चपलाक् ॥ २९ ॥

आर्याया उभयोरर्धयोर्द्वितीयश्चतुर्थश्च गणो गुरुमध्यो ककारो भवति चेत् चपला नाम भवति। यथा—

साधारणोष्णशीतः प्रचण्डवातावधूतवनविवरः।
अवगाहते वसन्तः सकिंशुकाशोकशतपत्त्रः ॥

## मुखचपलाद्ये ॥ ३० ॥

आर्याया आद्येऽर्धे भामध्ये द्वितीयश्चतुर्थश्च गणः ककारो भवति चेत् मुखचपला नाम भवति। यथा—

चित्रोतमकचापोच्छ्रितध्वजं जलधनिनदपटुनिनदम्।
दिनकरनृपतिभयङ्करजलधरसैन्यं समुपयाति ॥

## जघनचपलान्त्ये ॥ ३१ ॥

आर्याया अन्त्येऽर्धे द्वितीयश्चतुर्थश्च गणो भामध्यः ककारो भवति चेत् जघनचपला नाम भवति । यथा—

धारापातैर्वीताकृष्टैर्विप्रोषितेन्द्रनक्षत्रम् ।
आस्रावतीव दुःखेन तीव्रमुत्कण्ठितं व्योम ॥

## वामनिकाद्ये षष्ठो हः ॥ ३२ ॥

आर्याया आद्येऽप्यर्धे षष्ठो गणो लघुरेव केवलो भवति चेत् वामनिका नाम भवति । यथा—

प्रविततताराककुमुदे गतमेघे शरदि सौम्ये च ।
चन्द्रो विभाति सम्प्रति हंस इव नभःसरस्येषः ॥

## गीतिरन्त्ये दि वा ॥ ३३ ॥

आर्याया अन्त्येऽप्यर्धे षष्ठो गणो दकार इकारो वा भवति चेद् गीतिर्नाम भवति । यथा—

भ्रमदलिकुलविरुतप्रविततकमला विभान्ति कमलिन्यः ।
भासुरमरकतमणिनिभकोमलमृदुचारुवर्णसञ्छन्नाः ॥

## ध्रुवोभयोर्नी ॥ ३४ ॥

सैव गीतिश्चतुर्थे गणे यतिरुभयोरर्धयोर्भवति चेत् ध्रुवा नाम भवति । यथा—

ललनावनानि नीलालकानि ललितानि राजति ।
बन्धुजीवाधराणि रतिभोगसारसहितानि ॥

## गीतिका सप्तमो यी वा ॥ ३५ ॥

सैव गीतिर्गीतिका नाम भवति सप्तमो गणो यकार ईकारो वा भवति चेत् ।

यथा—

त्वामिह धन्यां मन्ये विचित्रधर्मार्थकामसंश्रयासु ।

यस्य चरितं तव मनो विद्वज्जनवल्लभासु गीतिकासु ॥

**क्वचित्तृतीयश्च पञ्चमोऽपि ॥ ३६ ॥**

क्वचित्प्रयोगान्तरे उभयोरप्यर्धयोः तृतीयश्च पञ्चमश्च गणो यकार ईकारो वा भवति । अपिशब्दादेकस्मिन्नप्यर्धे भवति । प्रयोगयत्नः कार्यः ।

**पूर्णार्द्धार्यागीतिः ॥ ३७ ॥**

सैव गीतिः पूर्णार्धा आर्यागीतिर्नाम भवति । यथा—

एतत्तद्भुजयुगलं मन्दरगिरिभित्तिघट्टिताङ्गदवलयम् ।

अस्ति तुमुलसरपातितात्मरुधिररागसंभृतं चर्म ॥

आर्यागीतिः सोपजातिरुक्ता । इदानीमन्याश्च काश्चिज्जातयो लोकप्रचरन्त्यो वक्ष्यन्ते ।

**प्रतिपादं पञ्चार्धं च गलितम् ॥ ३८ ॥**

पञ्च गणा गणस्यार्धं च पादे पादे भवन्ति चेद्गलितं नाम भवति । यथा—

न स्मरसि किं त्वदीरितशरभासुरतानाम् ।

अटवीषु चोग्रकेसरिशरभासुरतानाम् ॥

अथवा—वसन्तस्य दिष्ट्या निगातदन्तस्य ।

प्रातर्बाधाय गरं निगातदन्तस्य ॥

**चत्वारो निर्धायिका ॥ ३९ ॥**

चत्वारो गणाः प्रतिपादं भवन्ति चेन् निर्धायिका नाम भवति ।

**यी वान्त्यः ॥ ४० ॥**

अन्त्यो गणश्चतुर्णां पादानां निर्धायिकाया यकारो वा ईकारो वा भवति ।

## क् तृतीयः ॥ ४१ ॥

तस्या निर्धायिकायाः प्रतिपादं तृतीयो गणः प्रायेण ककारो भवति। यथा—

बाले बालेन्दुखण्डधारिणा क्रोधाद्दग्धोऽपि मन्मथाधमः।
सकलं लोकं हि चण्डमानं निशितैर्बाणैर्भिनत्ति मर्मसु ॥

## पञ्च नकुक्कुटम् ॥ ४२ ॥

प्रतिपादं पञ्चगणा भवन्ति चेत् नकुक्कुटकं नाम भवति तस्यैव नकुक्कुटकस्य द्वितीयतृतीयगणौ यकार ईकारो वा भवति।

## तृतीयो ब्वा ॥ ४३ ॥

तस्यैव नकुक्कुटकस्य तृतीयो गणो बकारो वा भवति यथा—

उपरि विधूतभस्मनिकरप्रवरसुरभित-
श्रवणभुजङ्गवक्त्रमस्ता दहनकणमुचा।
धवलितमिन्दुखण्डकिरणैः क्षरदमृतलवैः
कपिशमयूखभिन्नतिमिरं नयनमवतु वः ॥

इदं वरं एष विजृम्भमाणः कुमुदानन्दः
स तु नवनीतपिण्डसदृशस्तिमिरविमथनः।
रजनिकरोऽप्युपैति शनकैर्गगनं नील-
सरस इव नीलं विपुलं हंसः ॥

## षडधिकाक्षरा ॥ ४४ ॥

प्रतिपादं षट् गणा भवन्ति चेदधिकाक्षरा नाम भवति।

## युङ् न क् ॥ ४५ ॥

तस्या अधिकाक्षराया प्रतिपादं युग्गणः ककारो न भवति।

**तृतीयः ॥ ४६ ॥**

तस्या अधिकाक्षरायाः प्रतिपादं तृतीयो गणः ककार एव भवति ।

**यी वान्त्यः ॥ ४७ ॥**

तस्या अधिकाक्षरायाः प्रतिपादमन्त्यो गणो यकार ईकारो वा भवति ।

**क्वचिदाद्योऽपि ॥ ४८ ॥**

तस्या अधिकाक्षरायाः क्वचित्प्रयोगान्तरे आद्योऽपि गणो यकार ईकारो भवति । यथा—

विकसितनीलोत्पलाचितमदनबाण-
दीपनं ध्रुवं मधुचषकाद्यतिशायिनम् ।
दयितमुखसमर्पितं सुतनुनिषेवितं
युवतिरतिरहस्तनुतरङ्गविह्वलम् ॥

**नववागधिकाक्षरा (न च वाधिकाक्षरा) ॥ ४९ ॥**

यथा च श्रुतिमनोऽभिनन्दिनी ।

**शीर्षकं गीतिकापरा ॥ ५० ॥**

सैवाधिकाक्षरा गीतिकापरा भवति चेत् शीर्षकं नाम भवति । यथा—

विचरन्ति महेन्द्रगोपिका नीलशाड्वलश्रियः
स्तोको ग्रहचन्द्रभास्करा छादयन्ति नीरदाः ।
मेघोदचारिणी च विलसति तटित्समन्ततः
प्रणदन्ति वनस्थलीषु मुदितमनसश्चातकाः ॥

कुटजकुसुमाधिवासितशिलीन्ध्रकन्दलवनान्तसेविनश्च ।
वान्ति पवनाः प्रवासिनां कुर्वन्ति च सोत्सुकानि मानसानि ॥

एकैकवृद्ध्या ललितसुभद्रविद्रुमवंशपत्रकुञ्जरवंशपुष्पदन्तमालाः ॥ ५१ ॥

इत्येवं नामकानि सप्तशीर्षकाणि भवन्ति । तत्र

ललितस्य पादः सप्त गणा अन्ते गीतिका च ॥ ५२ ॥

एवं शीर्षकाणि एकैकवृद्ध्या ज्ञेयानि ।

निर्धायिकामध्यं त्रिकलयम् ॥ ५३ ॥

उक्तप्रकारं शीर्षकं निर्धायिकामध्यं भवति चेत् त्रिकलयं नाम भवति । आदौ अधिकाक्षरा मध्ये निर्धायिका अन्ते गीतिका एवमेतास्तिस्त्रिकलयमिति ।

विकसितं कुसुमं निशागमे चन्द्रबोधितं
सङ्कोचमुपैति पङ्कजं भ्रमर एव सोत्सुको
विनदन्ति मनोहराणि केदारोदरसंस्थिताः
कान्तासहिता विचिन्त्य किमपि कलहंसा ॥

हिता सारसाः शालारूढैरिवेन्द्रगोपकैः पुष्पैर्विभान्ति च बन्धुजीवकाः
शर्वर्य उपविकीर्णतारका विकसितकुसुमा विभान्ति शीर्षकाः ॥

सच्छदमकरन्दमविहाय कुसुमातिवातिलोलुपानि ।
मधुकरकुलानि सादरं श्रयन्ति कुमुदानि रेणुपाण्डराणि ॥

गणास्त्रयो भङ्गद्विपदी ॥ ५४ ॥

त्रयो गणाः प्रतिपादं भवन्ति चेत् भङ्गद्विपदी नाम भवति । गणाधिकारे वर्तमाने पुनर्गणग्रहणं चतुर्लघूनां पञ्चलघूनां च सर्वेषां गणानामभेदेन ग्रहणार्थम् । अन्यथा हि चतुर्लघूनामेव ग्रहणं स्यात् ।

चत्वारः पञ्च षट् सप्त वा ॥ ५५ ॥

तस्या एव भङ्गद्विपद्याः ... गणा भवन्ति चत्वारो वा पञ्च वा षड् वा सप्त वा भवन्ति




**भान्ते वा ॥ ५६ ॥**

तस्या भङ्गद्विपद्या प्रतिपादं गुरुरन्ते भवति वा न वा ।

**त्रिंशद्वा परमा ॥ ५७ ॥**

त्रिंशल्लघवो यस्या भङ्गद्विपद्याः सा भवति त्रिंशद्वा परमाधिका भङ्गद्विपदी ततः सर्वाभ्यो भङ्गद्विपदीभ्यो या परमा सा त्रिंशद्वा भवति तदधिका नास्ति ।

**द्विपदी गीतिका परा ॥ ५८ ॥**

सैव भङ्गद्विपदी द्विपदीत्युच्यते गीतिका परा भवति चेत् । उदाहरणम्—

क्षीणमम्बुवापीषु सरित्सु च साम्प्रतं रक्ष्यमाणं बहुधनमिह भाग्यविपर्यये
तप्तपांसुरेषा च विशुष्कवनद्रुमाबद्धचोरमत एव मही परितप्यते ।

अवसीदति श्रमासहं गात्रं महिषस्य घर्ममूर्छितस्य
बहुपोष्यबालपरिजनंम्र(गृ ?)हतन्त्रमिवातुरं निरुद्यमस्य जयमपरा ॥

द्विपदी

करुणाकरनिष्करुणेन वायुना रिपुवारणदानगन्धिना
बहुवल्लभवल्लभविप्रयोजितो जनकान्तो जनश्चरताद्य दूयते ।
अधुना मधुकरबन्धुना बन्धूकेन सरजस्ककेसरेण
भवतेव जगद्बन्धुना कुलमण्डनमण्डितानि भूस्थलानि ॥

क्वचिद्विदारीमध्ये क्वचित्प्रयोगान्तरे भङ्गद्विपदीगीतिकयोर्मध्ये विदारी भवति विदारीलक्षणमुत्तरत्र वक्ष्यति । यथा—

अभिनवकन्दलीककुसुमे केसरलील....धरस्थलीमुखा ।
कुसुमितकुटजसुरभिपरागविराजितसानुकानु(न ?)ना ।
समदमयूरमधुकरकोकारावा पूरितकन्दरोदरा
ससलिलमुखरजलदमलिनानिस्यो रमयन्ति मानसं ॥

केतकसूचिभिदा मरुता वकुलरजांसि समुद्वहता ।
अभिमुखदयितजनोऽपि जनः सोत्सुक एव बलात्क्रियते ॥

अवनुन्नातपरेणुना करेणुनाथ मलिनेन तोयदेन ।
उपगिरिमुदन्तविद्युता सकलं जगदर्ध्यते मनोभवाय ॥

**विदारी भान्ताश्चतुर्दश लघवः ॥ ५९ ॥**

प्रतिपादं भवन्ति चेत् विदारी नाम भवति ।

**मिश्रः पञ्चकः प्रायः ॥ ६० ॥**

तस्या विदार्याः प्रतिपादं पञ्चमो लघुः पूर्वेण वा लघुना परेण वा मिश्रो गुरुर्भवति प्रायः ।

**उपान्त्या ॥ ६१ ॥**

प्राय इति वर्तते। तस्या विदार्याः प्रतिपादमन्त्यस्य समीपे प्रायः भकारो भवति। अत्रानियमः ।

सायसुरभिरजधूसरया
मृदुमलयानिलक्षपितया ।
कामिजनो नवमालिकया
निगलितमानमनाः क्रियते ॥

**त्रयोविंशति भङ्गुरासकम् ॥ ६२ ॥**

भान्ता इति तु वर्तते । गुर्वन्तास्त्रयोविंशल्लघवो यथेष्टं मिश्रिता भवन्ति चेत् भङ्गुरासकं नाम भवति ।

**द्वादशावलम्बनम् ॥ ६३ ॥**

तस्याः प्रतिपादमन्ते प्रायो भकारो भवति ।

**उभे रासकम् ॥ ६४ ॥**

उभे भङ्गुरासकावलम्बने सहिते रासकमित्युच्यते । यथा—

कया बाहुमूलत्रिकदेशनिवेशितानि गूहसेद्य वसनेन
किमङ्ग नखक्षतानीति लक्ष(ण)मङ्कनालिङ्गनमनंगसाक्षिप्रभवजन्म ।
तव भरति तृतीयमिवेदमक्षिदशनप्रचितेन
क्षतजलवारुणितेन शोभितेन वाधरेण त्वमसि विलासधरे ॥

गाथा ॥ ६५ ॥

सा च गाथा आर्षीति ज्ञेया । ऋषेरेवेयमित्यार्षी । पञ्चस्वनुष्टुबादिजात्यन्तेषु सा गाथा भवति ।

पादैश्चतुर्भिष्षड्भिर्वा ॥ ६६ ॥

सा गाथा चतुर्भिर्वा षड्भिर्वा पादैः स्वजातीयैर्वा भवति । यथा—

पश्यति पश्यति परदोष-
मात्मदोषं न पश्यति
भर्तारमथ धनं च ।
कुलं च हित्वा किं किं हसमि
दश धर्मं न जानाति
धृतराष्ट्र निबोधतान ॥

मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च भीतश्च कामी चोरश्च ते दश ॥

इति जानाश्रय्यां छन्दोविचित्यां जात्यध्यायः पञ्चमः ॥

---

श्रीः

अथ षष्ठोऽध्यायः ।

प्रस्तारः ॥ १ ॥

प्रस्तार इत्यधिकारः । इत उत्तरं यद्वक्ष्यमाणं प्रस्तार इति ज्ञेयः ।

## आद्यं गा ॥ २ ॥

सर्वेषां छन्दसामाद्ये वृत्ते गुरव एव भवन्ति । एतदुक्तं भवति । सर्वेषां छन्दसामाद्यं वृत्तं सर्वगुर्विति ।

## आदौ ह्रा ॥ ३ ॥

सर्वगुरुवृत्तमाद्यं कृत्वा ततो द्वितीयस्य वृत्तस्य छेदने द्वितीयवृत्तादौ लघुरेकः कार्य इति ।



## पूर्ववच्छेषम् ॥ ४ ॥

द्वितीयवृत्तादौ लघुमेकं कृत्वा ततोऽनन्तरमुपरि न्यस्तं पूर्ववृत्तमिव शेषं कुर्यात् । शेषमिति क्रियमाणवृत्तशेषम् । इदं प्रस्तारनेत्रद्विसूत्रयुक् सर्वेषां छन्दसां युक् वृत्तप्रस्तारे योज्यम् ।

## भाहतुल्याः ॥ ५ ॥

अथ तृतीयवृत्तस्य छेदने पूर्ववच्छेषं कृत्वा परिसमाप्ते द्वितीये वृत्तेऽथ तृतीयस्य छेदने तृतीयवृत्तादौ गुरु द्वितीयवृत्तादिवत् तुल्यसंख्यः कार्यः ।

## इति ह ॥ ६ ॥

अथ तृतीयवृत्तादौ पूर्ववृत्तलघुसंख्यं गुरुं कृत्वा तेषां गुरूणामनन्तरं ह इति लघुरेकः कार्य इति ।

## शेषं पूर्ववत् ॥ ७ ॥

शेषमिति क्रियमाणवृत्तशेषमित्यर्थः । पूर्ववदिति अनन्तरमुपरिन्यस्तवृत्तसूत्रवदित्यर्थः । एतदुक्तं भवति । अनन्तरमतीतवृत्तलघुगुरुसंख्यं गुरुलघुविन्यासं कुर्यादित्यर्थः । इदं तृतीयप्रस्तारनेत्रं त्रिसूत्रयुक्तं सर्वेषामयुग्वृत्तप्रस्तारे योज्यः । आभ्यां प्रस्तारनेत्राभ्यां क्रमशो विवर्तमानाभ्यां सर्वेषां छन्दसां चतुर्थादिषु युगयुग्वृत्तेषु प्रस्तारविधिः कार्यः । आसर्वलघुवृत्तदर्शनादेष सर्वेषां छन्दसां प्रस्तारविधिः । अयमन्यः क्रम ।

**भाद्यौ मिश्रावधोऽधः ॥ ८ ॥**

दिदृक्षितस्य छन्दसः वृत्तानां प्रमाणसंख्या लब्धा यावत्तावत्तौ गुरुलघुमिश्रे एकान्तरितौ कार्यावधोऽधः ।

**भौ भौ परे ॥ ९ ॥**

तेषां तथा न्यस्तानां परतो द्वौ गुरुलघू चाधोऽधः कार्यौ । पूर्वमेकान्तरितन्यस्त-गुरुलघुसंख्याप्रमाणप्राप्तेरिति तद्विपरीत इत्यनुवर्तते । तथा न्यस्तानां तेषां परतो द्विगुणं द्विगुणं गुरवो लघवश्चाधोऽधः कार्याः । आछन्दोक्षरप्रमाणपरिसमाप्तेरित्युक्त-मेवार्थं निरूपयिष्यामः । आद्या द्विगुणक्रिया चत्वारो गुरवश्च लघवश्च ततोऽष्टावेव द्विगुणद्विगुणवृद्धिः सर्वेषां छन्दसामाच्छन्दोक्षरपरिसमाप्तेरिति ।

**नष्टम् ॥ १० ॥**

नष्टमिदानीं वक्ष्यते । हृत्वा होर्धं यस्य कस्यचित् छन्दसः संभवति । दश शतं सहस्रतमं वा दर्शयेत्युक्ते तेनोक्ता या संख्या तावन्ति रूपाणि विन्यस्य तदर्धमपनीय लघुमेकं न्यस्य पुनः पुनरेवं कार्यः ।

**दत्त्वैकं समे भाः ॥ ११ ॥**

अर्धे पुनर्ह्रियमाणे यदि विषमता स्यात तत एवैकं दत्त्वा समतां कृत्वा ततोऽर्धमपनीय गुरुमेकं विन्यस्य पुनः पुनरेवं कार्यः । यावद्दिदृक्षितस्य छन्दसोऽक्षराणि परिपूर्णानि भवन्ति तावदेवं कृत्वा इदं तद्वृत्तमिति दर्शयेत् ।

**उद्दिष्टम् ॥ १२ ॥**

उद्दिष्टमिदानीं वक्ष्यते ।

**द्विगुणं द्विगुणं वर्धयेत्प्रतिलोमतः ॥ १३ ॥**

कस्यचिच्छन्दसो यत्किंचिद्वृत्तं विन्यस्येदं वृत्तं कतमदित्युक्ते तस्य वृत्तस्या-न्त्याक्षरादारभ्य द्वि चत्वार्यष्टौ षोडश इति प्रतिलोमतो द्विगुणं द्विगुणं वर्धयेत् ।

## एकहानिर्भे ॥ १४ ॥

एवं प्रतिलोमता वर्धयतो गुरौ वर्धिते एकेन हानिः कार्या । एवं कृत्वा यथालब्धसंख्यावशाद्वक्तव्यमिति ।

## अयमेकस्तूपदेशः ॥ १५ ॥

तत्र सर्वेषां छन्दसां वृत्तेषु विधिवत् प्रस्तरितेषु तत्राद्यमर्धं गुर्वन्तं भवति । अपरमर्धं लघ्वन्तम् । तत्र लघ्वन्ते उद्दिष्टे वृत्ते उत्तरार्धे वृत्तमिति ज्ञात्वा तस्योत्तरार्धवृत्तस्यान्त्याक्षरात् प्रभृति द्विगुणं वर्धयित्वा गुरौ वर्धिते पूर्ववदेकहानिं कृत्वा आछन्दोऽक्षरपरिसमाप्तेः पूर्वार्धवृत्तानि च वक्तव्यानीति । अयं तृतीयस्य क्रमः ।

## लघुपरीक्षा ॥ १६ ॥

लघुपरीक्षेदानीं वक्ष्यते ।

## एकैकवृद्धमाच्छन्दसम् ॥ १७ ॥

यस्य कस्यचिच्छन्दस एकलघुवृत्तानामन्येषां च प्रमाणं जिज्ञासमाने एकैकवृद्धान्यक्षरस्थानि दिदृक्षितं छन्दोऽक्षरप्रमाणानि क्रमात् न्यस्यानि । एवं विन्यस्य पूर्वं पूर्वं परयुतमविनाश्यान्त्यमपास्य पूर्वमक्षरस्थानं परेणाक्षरस्थानेन युक्तं कर्तव्यम् । अविनाश्यान्त्यमक्षरस्थानं पूर्वमेवापास्यान्यत्र न्यस्येत् । ततः पुनः पुनः पूर्वं परयुतं कृत्वान्यत्र न्यस्तस्य परतः परतो न्यसितव्यम् । अन्त्यमेकमवशिष्टं भवति । तच्च तेषां परतो न्यसितव्यम् । एवं विन्यस्य प्रथममक्षरस्थानमवेक्ष्य तदुपलब्धसंख्यावशादेकलघुवृत्तानीयन्तीति वदेत् ।

एवं तृतीयादीनवेक्ष्य त्रिलघुवृत्तादीनि ब्रूयादित्ययमन्यः क्रमः ।

## सबिन्द्वाद्यं ततो द्विद्विः सबिन्दुः ॥ १८ ॥

सबिन्दु आद्यमक्षरस्थानं कुर्यात् । पश्च द्विगुणद्विगुणितानि दिदृक्षितं छन्दोक्षरप्रमाणानि कार्याणि । एवं कृत्वा एकलघुवृत्तादिदिदृक्षायां सत्यां तद्योरूपं नयेत् ।

**क्रमाद् द्विर्नयेत् ॥ १९ ॥**

तेषां तथा न्यस्तानामक्षरस्थानामधस्ताद्दिदृक्षितलघुवृत्तप्रमाणानि रूपाणि विन्यस्य क्रमान्नयेत् । एकं द्वे त्रीणीति गणयन्नाद्यादारभ्यान्तादेवं नीत्वा यथालब्ध संख्यावशादेकादिलघुवृत्तादीनि वक्तव्यान्येतावन्तीत्यनेन स्वेषु रूपेषु विन्यस्तेष्वन्त यथा स्थितस्थानमेकैकमिति द्वे इत्युक्तमक्षरस्थानं नयेदिति । तानि पुनर्वृत्तानी द्वे इति जिज्ञासायां सत्यां युक्तिरूपाणि विन्यस्य सरूपं बिन्दुना वदेत् । सह रूपे वर्तत इति सरूपं बिन्दुना सार्धं सरूपं विगणय्य यथालब्धसंख्यावशादिदं चेदि चेति वक्तव्यम् । ते ते लघवस्तेषु कस्मिन् कस्मिन् स्थाने स्थिता इति चेत्—

**स्थानानि तान्येव ॥ २० ॥**

तेषां लघूनां स्थानानि तान्येव भवन्ति । एतदुक्तं भवति—येषु येष्वक्षरस्थानेषु रूपाण्यवस्थितानि तान्येव स्थानानि वृत्तेषु लघूनामिति । इयमपरा लघुपरीक्षा । उक्त एकादशस्य वृत्तस्य लघवः कियन्त इत्युक्ते पूर्ववदक्षरस्थानानि न्यस्य तावत् यावद्भि सबिन्दुभिः स्थानैरबिन्दुना सह यावद्भिरक्षरस्थानैरेकादशसंख्या परिपूर्णा भवति तावन्तस्तस्यैकादशस्य वृत्तस्य लघवो भवन्ति । एवं विशेषाणामपि ज्ञेयम् । अत तत्स्थानानि तान्येव भवन्ति ।

**संख्या ॥ २१ ॥**

संख्येदानीं वक्ष्यते । यस्य कस्यचिच्छन्दसः समवृत्तसंख्यादिदिदृक्षायां सत्यां तस्य पादाक्षराणि विन्यस्य ततः—

**भार्धहृते ॥ २२ ॥**

विन्यस्तानां पादाक्षराणामर्धं हृत्वा गुरुन्यासः पुनः पुनरेवकार्यः । अर्धे पुनर्ह्रियमाणे यदि विषमता स्यात्—

**द्वो सममपास्यैकम् ॥ २३ ॥**

एकमपास्य पूर्वन्यस्तस्याधो लघुं न्यस्यैवं सर्वाण्यपनयेत । एव संख्यागर्भः ।

## मे द्विः ॥ २४ ॥

लघौ लघौ द्विद्वि कुर्यात् । तावता मे गुणयेत् वर्धयेदित्यर्थः । उक्तमेवार्थं निरूपयिष्यामः । तद्यथा—

चतुर्विंशत्यक्षरा गायत्री तस्याः पादाक्षराणि षट् तानि विन्यस्य ततस्तदर्धं हृत्वा गुरुं न्यस्य ततस्त्रीण्यवशिष्टानि भवन्ति । तत्रासमतया अर्धं हर्तुं न शक्यते । तत एकमपास्य लघुं न्यस्येत् । अवशिष्टे द्वे भवतः । ततोऽर्धमपास्य गुरुं न्यस्येत । एवमवशिष्टं तदप्यपनीय लघुं न्यस्येत् । अयं संख्यागर्भः । ततस्तु हे द्विरिति परमेव लघू द्वे कुर्यात् । ततस्ते तूपरि न गुरुमपनीय द्वाभ्यामेव गुणयेत् । गुणिते चत्वार्यक्षराणि भवन्ति । तानि चत्वारि चोपरि लघुमुपनीय द्विः कुर्यात् । अष्टौ भवन्ति । तानि चाष्टौ शेषगुरुमुपनीयाष्टाभिरेव गुणयेत् । गुणिते च चतुष्षष्टिर्भवति । तदा गायत्र्याः समवृत्तसंख्यापरिमाणमयमेवं विधिः । सर्वेषां छन्दसामिह गायत्र्याः समवृत्तसंख्यां ज्ञात्वा तत्परस्योष्णिक्छन्दसः समवृत्तसंख्याधिगमे विधिर्वक्ष्यते । तद्धि परस्य तानि गतानि गायत्र्याः समवृत्तानि भवन्ति । तानि द्विगुणीकृतान्युष्णिहः । तानि द्विगुणीकृतान्यनुष्टुबः । एवं सर्वेषामिति वेदितव्यम् । गायत्र्याः समवृत्तसंख्यां ज्ञात्वा पुनरुक्तादीनां षण्णां छन्दसां समवृत्तानि सर्वाणि सहैव ज्ञातुमिच्छतामुपायं ब्रूमः ।

## द्व्यूनं तदन्तानाम् ॥ २५ ॥

तद्द्विरित्यनुवर्तते तद् गायत्री समवृत्तसंख्याप्रमाणं द्विगुणीकृतं च द्वाभ्यां हीनं तदन्तानां गायत्र्यन्तानां षण्णां समवृत्तसंख्याप्रमाणं भवति । तत्तु षड्विंशत्यधिकशतमेवं विशेषाणामपि ज्ञेयम् । समवृत्ताधिगमे ब्रूमः—समवृत्तो वर्गमूलो गाध्वर्धसमः । समतुलेन गुणितो वर्ग इत्युच्यते । रागिणः समवर्गस्तस्य मूले गाश्चेदर्धसमवृत्ताधिकरणं भवति । समवर्गस्तु चत्वारि सहस्राणि षण्णवतिश्च स तु मूलेश्चत्वारि सहस्राणि द्वात्रिंशदधिकानि ।

## उभयवर्गो विषमः ॥ २६ ॥

मूलोन इति वर्तते । उभयेषां समानां वृत्तानां वर्गः स तु मूलोनः विषमवृत्तप्रमाणं भवति । उभयवर्गः कियानिति चेत् प्रतिलोम एकः षट् सप्ताथ सप्त

द्वे चैकमेव षड्वर्गः समार्धसमयोर्गायत्रीया कथयेद्बुधः मूलं तु चत्वारि सहस्राणि षण्णवतिश्च तेन हीन उभयवर्गः ।

एकं षट् सप्त सप्ताथ त्रीण्येकं द्वे च शून्यकम् ।
प्रमाणं विषमाणां तु गायत्र्या लक्षयेद्बुधः ॥

एवमन्येषां छन्दसां ज्ञेयम् ।

अध्वा ॥ २७ ॥

अध्वा इदानीं वक्ष्यते. ।

वृत्तं द्विरेकोनम् ॥ २८ ॥

वृत्तानि द्विगुणीकृतानि एकेन हीनानि अध्वप्रमाणं भवति । सर्वेषां छन्दसां तत्र गायत्र्या अध्वयोगं दर्शयिष्यामः । अस्याः सर्वाणि वृत्तानि द्विगुणीकृतानि—

तानि त्रीण्यथ पञ्चापि पञ्च चत्वारि तत्त्वतः ।
चत्वारि त्रीणि चाप्येवं प्रमितान्यङ्गुलानि वै ॥

अङ्गुलमष्टौ यवा द्वादशांगुलानि वितस्तिहस्तो द्वौ हस्तौ किष्कुधनुः धनुः सहस्रे द्वे क्रोशश्चत्वारः क्रोशा योजनम् ।

तान्यङ्गुलानि हस्तस्य संख्यया त्रयोदशलक्षाणि मन्नुव(?)दशशतं चैकासप्तांगुलानि । धनुः संख्यया त्रीणि लक्षाणि चत्वार्ययुतानि नव सहस्राणि च पञ्चशतानि पञ्चविंशतिश्च । विंशतिश्च? हस्तश्चैकः योजनसंख्यया त्रयश्चत्वारिंशद्योजनार्धयोजनश्च धनुषां सहस्राणि पञ्चविंशत्यधिकानि पञ्च शतानि च सप्ताङ्गुलाधिको हस्तश्चैक इति सभाहा च येनाक्षरेभ्योऽधिका स खलु गुरुर्भवति ।

गङ्गा कुरुते विभाति सातव नचरति इत्यादिचतुष्काभ्यां गणाभ्यां षट्कसप्तकाष्टकैश्च मात्रासमूहैर्यथास्वमल्पभेदान्निष्पन्नानां वैतालीयादीनां जातिश्लोकानां लाघवे मात्रा येन प्रमाणेन यावताऽनेनाक्षरेभ्योऽधिका भवतीति ।

इति जानाश्रय्यां छन्दोविचित्यां प्रक्रियाध्यायः षष्ठः ।

समाप्तेयं छन्दोविचितिः

## उदाहृतश्लोकसूची

| अ | | | पृ.अ. |
| --- | --- | --- | --- |
| अतिरुचिररुचिरसम | | .... | ३० |
| अतिलोमशा कुटिलकेशी | | .... | १५ |
| अथ तत्रशुचौ लतागृहे | | .... | २ |
| अथ प्रजानामधिपः प्रभाते | रघुवंशः २-१ | .... | २३ |
| अथ वासवस्य वचनेन | | .... | ९ |
| अनन्तरत्नप्रभवस्य यस्य | कुमारसंभवम् १-३ | .... | १३ |
| अनिभृतनयनं सविभ्र | | | २९ |
| अनियतरुदितं स्मित | | .... | २९ |
| अन्योन्यमुत्पीडयदुत्पलाक्ष्या | कुमारसंभवम् | .... | १५ |
| अभिनादितमम्बराद्धनै | | .... | ४० |
| अभिभवकन्दलीककुसुमे | | .... | ५२ |
| अभिवीक्ष्य नितान्तताम्र | | .... | ४१ |
| अम्भोदानामसितानां | | .... | २,४० |
| अम्भोदैरनिलोद्धतै | | .... | ११ |
| अम्भोभारप्रलम्बबिम्बाः | | .... | ४४ |
| अर्धेन मिश्राः षट् भेदाः | | .... | २४ |
| अननुज्ञातपरेणुना | | .... | ५३ |
| अवसीदति श्रमासहं | | .... | ५२ |
| अविदितविभवा ध्रुवा | | .... | २७ |
| असमश्रुतमुखैर्विषमैः | | .... | ४३ |
| असंभृतं मण्डनमङ्गयष्टेः | कुमारसंभवम् १-३० | .... | २३ |
| असंभृतपयोधरा | | .... | ३२ |
| असितामलायत | | .... | ९ |

आ | | पृ.अ.

ग्रन्थसूची ।


| | |
|---|---|
| जानकीहरणम् | ४१-११७ |
| सौन्दरनन्दम् | ४१-१००/२१९ |
| बुद्धचरितम् | ४१-१००/२९८-२९९ |







## LIST OF SRI VENKAT ... A ORIENTAL INSTITUTE PU .CATIONS

| *Sri Venkatesvara Orien. ... eries :—* | Rs. | A. | P. |
|---|---|---|---|
| 1. **Sri Venkatesvara Ka . . Kalapa**, Ed. by Sri D. T. Tatacharya ... | 4 | 0 | 0 |
| 2. **History of Tirupati**, Vol. II by Dr. S. Krishnaswami Aiyangar ... | 3 | 0 | 0 |
| 3. **A Glossary of Indian Philosophical Terms**, by Sri C. V. Sankara Rao ... | 1 | 8 | 0 |
| 4. **Psychology (in Telugu)** by Dr. K.C. Varadachari. | 2 | 0 | 0 |
| 5. **Isavasyopanishad Bhashya**, of Venkatanatha Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya .. | 2 | 0 | 0 |
| 6. **Sam rtarchanadhikarana (Atri Samhita)** Ed. by Sri P. Raghunatha Chakravarti Bhattacharya and Sri M. Ramakrishna Kavi . | 6 | 0 | 0 |
| 7. **Suvarnasaptati**, Ed. by Sri N. Aiyaswami Sastri | 3 | 0 | 0 |
| 8. **Kenopanishad Bhashya** of Rangaramanuja Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya ... | 1 | 0 | 0 |
| 9. **Tirukkural Kamattuppal** with two old Commentaries Ed. by Sri T. P. Palaniappa Pillai .. | 2 | 0 | 0 |
| 10. **Sri Venkatesvara Vachanamulu**, Ed. by Sri V. Prabhakara Sastri ... | 1 | 8 | 0 |
| 11. **Sringara Sankirthanamulu** by Tallapaka Annamacharyulu. IV Volume of Tallapaka Works Ed. by Sri V. Prabhakara Sastri ... | 2 | 0 | 0 |
| 12. **Kasyapa Jnanakanda (Kasyapa Samhita)** Ed. by Sri R. Parthasarathi Battachar ... | 3 | 0 | 0 |
| 13. **Andhra Kuvalayanandamu** by Ubhaya Bhasha Pravina K. Subramanya Sastri ... | 3 | 12 | 0 |
| 14. **Tirukkural-Porutpal** with the Commentaries of Kālingar and Parippérumāl Edited by Sri T. P. Palaniappa Pillai .. | 4 | 0 | 0 |
| 15. **Kathopanishad Bhashya** of Rangaramanuja Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya ... | 3 | 12 | 0 |
| 16. **Sri Venkatesvara Laghu Kritulu**, Ed. by Sri V. Prabhakara Sastri ... | 1 | 8 | 0 |
| 17. **Annamacharya Charitramu** Ed. by Sri V. Prabhakara Sastri | 2 | 8 | 0 |
| 18. **Tiruvengada Sthalapuranam** by Madurakavi Viraraghavaswami Ed. by Sri T.P. Palaniappa Pillai. | 1 | 8 | 0 |
| 19. **Alankarasangraha** by Amritananda Yogin Ed. by Sri P. Balakrishnamurti ... | 3 | 4 | 0 |
| 20. **Sankaravilasa** by Chidambaranatha Ed. by Sri T. P. Palaniappa Pillai | 3 | 4 | 0 |

*Copies can be had of* THE DIRECTOR,
S. V. ORIENTAL INSTITUTE, TIRUPATI, (Chittoor Dt., S I.)

